सोऽहमिदानीम् अवसितप्रतिज्ञाभरोऽपि वृषलापेक्षया (म) शस्त्रं धारयामि। येन मया—

समुत्खाता नन्दा नव हृदयरोगा इव भुवः
कृता मौर्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥ १३ ॥

अथ वा, अगृहीते राक्षसे, किमुत्खातं नन्दवंशस्य, किं वा स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः। [ विचिन्त्य। ] अहो! राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः; स खलु, कस्मिंश्चित्

---

सिंहाङ्कितराज्यासनात् पातितं भ्रंशितं तथैव पूर्व्ववत् शोचन्त एव पश्यन्तु। योगानन्देन यथा ममापकृतं मयापि तस्य तथैवापकृतमिति द्योतनाय तथैवेति शब्दौ। शार्दूलविक्रीड़ितं वृत्तं, "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्" इति लक्षणात् ॥ १२ ॥

(म) प्रतिज्ञा भर इव दुःखेन वाह्यत्वात्, अवसितः समाप्तः प्रतिज्ञाभरो यस्य; अवसितप्रतिज्ञाभरः तीर्णप्रतिज्ञ इत्यर्थः। अवपूर्वकात् स्यतेः कर्त्तरि क्ते सिद्धम्। वृषलापेक्षया चन्द्रगुप्तानुरोधेन।

समुत्खाता इति।—येन मया च हृदयरोगा इव हृद्गताः रोगाः विषयवासनारूपा अन्तःशल्य इव, यद्वा भुवः पृथिव्या हृदयरोगा इव स्थिताः अत्यन्तप्रकृतिरञ्जनात् तथात्वम्। योगानन्दसत्पुत्राश्चाष्टौ इति नव नन्दाः समुत्खाताः समूलमुन्मूलिताः "नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यति" इति पुराणवचनानुसन्धेयम्। लक्ष्मीः राजश्रीः सरसि नलिनीव मौर्य्ये चन्द्रगुप्ते स्थिरपदा अचला चिरस्थायिनी इति यावत्, कृता। अभियुक्तेन अभिनिविष्टेन आग्रहवता मनसा, द्वयोः कोप-प्रीत्योः क्रोधानुरागयोः तुल्यमनुरूपं सारम् उत्कृष्टं द्वितयं द्विविधं निग्रहानुग्रहरूपं फलं द्विषति शत्रौ योगानन्दे सुहृदि शरणागततया कृतमैत्रे मित्रे चन्द्रगुप्ते च विभक्तं यथायथमर्पितमित्यर्थः। शिखरिणीवृत्तं, "रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति लक्षणात् ॥ १३ ॥

(य) अगृहीते अनायत्तीकृते इत्यर्थः। किमुत्खातमित्यनेन राक्षसस्य बुद्धिमाहात्म्यात् पुनरप्यो नन्दवंश्यः समुत्थास्यते इति भाव्यते। निरतिशयः नास्ति अतिशयो यस्मात्

अपि जीवति नन्दान्वयावयवे, वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। अतः तदभियोगं प्रति, निरुद्योगैः अस्माभिः अवस्थातुम् अयुक्तम् इति अनया एव बुद्धया, तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः, यावत् असौ मलयकेतुम् अङ्गीकृत्य अस्मदुच्छेदाय विपुलतरं प्रयत्नम् उपदर्शयति एव। [प्रत्यक्षवदाकाशे लक्ष्यं बद्धा] साधु अमात्य राक्षस! मन्त्रिबृहस्पते! साधु, (य) कुतः?—

ऐश्वर्य्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते,
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।
भर्त्तुर्यें प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्य्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ॥१४॥

---

सः अतिमहानित्यर्थः। नन्दान्वयावयवे नन्दवंशाङ्कुरे इत्यर्थः, साचिव्यं मन्त्रित्वं तपोवनगतः वैरनिर्यातनासामर्थ्यात् जातवैराग्यतया वानप्रस्थधर्ममाश्रित इत्यर्थः। तपस्वी अक्षमत्वात् निरपराधः, तथापि घातितः (हन्तेर्णिजन्तात् कर्म्मणि क्तः)। तद्वधे दोषं दर्शयति—यावदिति। असौ सर्वार्थसिद्धिः स्वयं राज्याभिलाषशून्योऽपि मलयकेतुं मित्रपुत्रमिति शेषः, अङ्गीकृत्य स्वराज्ये राजा भवतु इत्येवं स्वीकृत्य यावत् प्रयत्नम् उपदर्शयत्येव अवश्यम् उपदर्शयिष्यतीत्यर्थः; (यावत्पुरानिपातयोर्लट्, यावच्छब्दयोगे भव्ये लट्)। प्रयत्नमित्यत्र प्रपञ्चमिति पाठे—युद्धाद्योद्योगम्। विप्रकृष्टस्य अभिमुखीभावे सम्बोधनाभावात् अप्रत्यक्षमपि प्रत्यक्षवदाकाशे स्थितं इति विचार्य्य सम्बोधनसङ्गतिः, तदाह—प्रत्यक्षवदिति। उपमितसमासेन सूक्ष्मार्थदर्शितया बृहस्पतित्वारोपणम्। साधु इत्यव्ययम्। अध्याहर्त्तव्यकरणक्रियाविशेषणं सम्बोध्य विशेषणं वा।

ऐश्वर्य्यादिति।—अयं लोकः सांसारिकलोक इत्यर्थः, ऐश्वर्य्यात् अनपेतम् अभ्रष्टम् ऐश्वर्य्यशालिनमित्यर्थः। ईश्वरं प्रभुम् अर्थतः अर्थलाभहेतोः (सार्व्वविभक्तिकस्तसिल्) सेवते। ये पुनः विपत्तिषु शत्रुपराभवदुर्भिक्षादिकालेषु तं प्रभुम् अनुगच्छन्ति अनुसरन्ति तद्विपत्तौ आत्मानं विपन्नमिव मन्यन्ते इत्यर्थः, अथवा सेवन्ते विपदुद्धाराय यथातिशयं दर्शयन्तीत्यर्थः, ते तत्प्रतिष्ठाशया तस्य प्रभोः प्रतिष्ठा पुनरुत्थानं तत्र या आशा तया प्रभोः पुनः अभ्युदये अस्माकम् अभीष्टलाभो भविष्यतीति प्रत्याशया इत्यर्थः, यशोलिप्सयेति वा तथा

अतएवास्माकं त्वत्संग्रहे प्रयत्नः, कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति । कुतः ?—

अप्राज्ञेन च, कातरेण च, गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्, किं भक्तिहीनात् फलम् ?
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः, कलत्रमितरे, सम्पत्सु चापत्सु च ॥१५॥

तत् मयापि अस्मिन् वस्तुनि न शयानेन स्थीयते, यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः, कथमिति ? अत्र तावद् वृषल-पर्वतकयोः अन्यतरविनाशेनापि, चाणक्यस्य अपकृतं भवतीति, विषकन्यया राक्षसेन अस्माकम् अत्यन्तोपकारी मित्रं घातितः तपस्वी पर्वतेश्वर इति सञ्चारितो जगति जनापवादः लोक-प्रत्ययार्थमस्य एव अर्थस्याभिव्यक्तये (२)। पिता ते चाण-क्येन घातित इति रहसि त्रासयित्वा, भागुरायणेन अपवा-

---

भवन्तीति शेषः । ये तु भर्त्तुः स्वामिनः प्रलये मरणेऽपि पूर्वसुकृतासङ्गेन स्वामिकृतपूर्वोपकारवाध्यतया निःसङ्गया निर्लोभया स्वार्थशून्यया भक्त्या कार्य्यधुरां स्वामिनियुक्तकार्य्यभारं वहन्ति त्वादृशा भवद्विधास्ते कृतिनः कर्मिणः दुर्लभाः । शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

अप्राज्ञेनेति ।—सानुरागेण अनुरागवता अप्राज्ञेन बुद्धिरहितेन कातरेण विक्रमशून्येन भृत्येन नृपतेः कः गुणः ? किं फलं स्यात् ? न कोऽपीत्यर्थः । बुद्धिविक्रमवतोऽपि भक्तिहीनात् पूज्येषु अनुरागशून्यात् भृत्यात् वा नृपतेः किं फलं ? न किमपि इत्यर्थः । येषां प्रज्ञाविक्रमभक्तयः समुदिताः समस्ता एव गुणाः सन्तीति शेषः, ते भृत्या नृपतेः सम्पत्सु विभूतिकालेषु, आपत्सु विपत्कालेषु च भूतये मङ्गलाय भवन्तीति शेषः, इतरे प्रज्ञादिशून्याः भृत्याः नृपतेः कलत्रं स्त्री ऐश्वर्य्यलाभार्थमेव सेवनात् "न वै पत्युः कामाय प्रिया भवति आत्मनस्तु कामाय" इति श्रुतेः स्त्रीणां स्वकामायैव पतिसेवनं प्रसिद्धं तत्साहश्यात् तेऽपि कलत्रं न तु यथार्थभृत्या इति भावः । अत्रापि वृत्तं शार्दूलविक्रीडितम् ॥ १५ ॥

(२) अस्मिन् वस्तुनि विषये, शयानेन निश्चेष्टतया शयानतुल्येन, अनवहितेन इति यावत् । पर्वतो नाम कश्चित् राजा चाणक्यस्य मित्रमासीत् । तस्य स्वयं हननं कदापि

हित: पर्वतकपुत्रो मलयकेतु:। शक्य: खलु एष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुम्। न पुनरस्य निग्रहात् पर्वतकवधोत्पन्नमयश: प्रकाशीभवत् प्रमार्ष्टुम् अलमिति। अन्यञ्च, नियुक्ताश्च मया स्व-परपक्षयो: अनुरक्तापरक्तजनजिज्ञासया बहुविधदेशभाषावेशाचारसञ्चारवेदिनो नानाव्यञ्जना: प्रणिधय: (ल)। अन्विष्यन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां :निपुणतरं प्रचारगतय:। तत्तत्कारणम् उत्पाद्य कृतकृत्यताम् आपादिता: चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतय: प्रधानपुरुषा: (व)। शत्रुप्रयुक्तानाञ्च तीक्ष्णरसदायिनां प्रतिविधानं प्रति अप्रमादिन: परीक्षितभक्तव: क्षिति-

---

न सम्भाव्यते, तथात्वे च चन्द्रगुप्तस्य सहायहीनत्वं स्यादिति राक्षसेनैव असौ घातित इत्येवं साधारणजनविश्वासार्थम् अस्यैव पर्वतकवधरूपस्य अर्थस्य अभिव्यक्तये, केन साधित इति प्रकाशनाय विषकन्यया विषदायिन्या: कन्यया, ( अत्र प्रयोज्यकर्त्तरि तृतीया ) सम्भोगकालसमये यस्या स्पर्शात् सविषभक्ष्यभक्षणेन तत्क्षणादेव यथा मृत्युर्भवेत् तथा सज्जितया इति भाव:।

( ल ) अपवाहित: अपसारित: स्थानान्तरं नीत इत्यर्थ:। राक्षसमतिपरिगृहीत: राक्षसमति: परिगृहीता येन निष्ठान्तस्य परनिपात:। व्युत्तिष्ठमान: उद्यच्छन् युद्धार्थं कृतसन्नद्धतया इति शेष:। निग्रहात् हननात्। प्रमार्ष्टुं निराकर्त्तुम्। अनुरक्ता: अनुरागिण:, अपरक्ता: विरक्ता: तादृशानाम् उभयपक्षीयजनानां जिज्ञासया ज्ञानार्थमित्यर्थ:। नानाव्यञ्जना: नाना विविधं व्यञ्जनं चिह्नं येषां ते। प्रणिधय: गूढपुरुषा: चरा इति यावत्।

( व ) प्रचारगतय:—प्रचारा: कार्य्येषु प्रवृत्तय:, गतय: अवस्थाविशेषाश्च। तत्तत्कारणमिति—तत्तत्कारणं कृतकृत्यता-लाभकारणम्, उत्पाद्य घटयित्वा, कृतकृत्यतां मनोरथसिद्धिम् आपादिता: प्रापिता:, चन्द्रगुप्तसहोत्थायिन: चन्द्रगुप्तेन सह उत्थायिन: समित्थमाना: अभ्युदयमाना इत्यर्थ:, एतेन ते प्रधानपुरुषा: अनुरक्ता एव तिष्ठन्ति, न कदापि विरज्यन्ते इति भाव:

पतिप्रत्यासन्नाः नियुक्ताः तत्र आप्तपुरुषाः (अ)। अस्ति च अस्माकं सहाध्यायिमित्रं विष्णुशर्मा नाम ब्राह्मणः। स च औशनस्यदण्डनीतौ, चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च, परं प्रावीण्यमुपगतः। स च मया क्षपणक-लिङ्गधारी, नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय, सर्वनन्दामात्यैः सह सख्यं ग्राहितो, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः। तेन इदानीं महत्प्रयोजनमनुष्ठेयं भविष्यति। तदेवम् अस्मत्तो न किञ्चित् परिहास्यते। वृषल एव केवलं प्रधानप्रकृतिः अस्मासु आरोपितराज्यतन्त्रभारः सततमुदास्ते। अथवा यत् स्वयमभियोगदुःखैः असाधारणैः अपाकृतं, (ब) तदेव राज्यं सुखयति। कुतः?—

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः।
गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः॥ १६॥

[ततः प्रविशति सह यमपटेन चरः।] (स)

पणमह जमस्स चलणे, किं कज्जं देवेहिं अण्णेहिं।
एसो क्खु अस्सभत्ताणं हरइ जीअं फुडफुडन्तं (१)॥ १७॥

---

(१) प्रणमत यमस्य चरणौ, किं कार्य्यं देवैरन्यैः।
एष खल्वन्यभक्तानां हरति जीवितं परिस्फुरन्तम्॥

---

(अ) तीक्ष्णरसदायिनां विषदायिनाम्। अप्रमादिनः सावधानाः। क्षितिपतिप्रत्यासन्नाः राजपार्श्वचराः। आप्तपुरुषाः विश्वस्तजनाः।

(ब) औशनस्यदण्डनीतौ उशनसा शुक्रेण कृता औशनसी या दण्डनीतिः शासनशास्त्रं तस्याम्। प्रावीण्यं नैपुण्यम्। क्षपणकलिङ्गधारी नग्नसन्न्यासिचिह्नधारी। समुत्पन्नविस्रम्भः सञ्जातविश्वासः। परिहास्यते परिहीनं भविष्यति। उदास्ते उदासीनः सन् तिष्ठति। अभियोगदुःखैः कार्य्याभिनिवेशजनितैः दुःखैः। अपाकृतं रक्षितम्।

स्वयमाहरणे क्लेशं दर्शयन्नाह—स्वयमिति। सीदन्ति अत्यन्तकार्य्याकुलतयाऽवसन्ना भवन्ति, कष्टमाप्नुवन्तीत्यर्थः। अनुष्टुप् वृत्तम्॥ १६॥

(स) यमस्य पटश्च। शुभाशुभकर्म्मसूचकत्वात् तत्पटेन साहाय्यं लोकानां शुभाशुभकर्म्मसूचकपटदर्शनेन हि आजीविका भिक्षुकस्य।

अविअ,

पुरिसस्स जीविदव्वं विसमादो होइ भत्तिगहिआदो।
मारेइ सव्वलोअं जो, तेण जमेण जीआमो॥ १८॥

ता एदं गेहं पविसिअ, जमपडअं दंसअंतो गाएमि (२)।
[ इति परिक्रामति। ]

शिष्यः। [ विलोक्य। ] भद्र! न प्रवेष्टव्यम्।

चरः। हंहो बम्ह(ह्म)णा! कस्स एदं गेहम्? (३)।

शिष्यः। अस्माकम् उपाध्यायस्य सुगृहीतनाम्न (ह) आर्य्यचाणक्यस्य।

चरः। [ विहस्य। ] हंहो बम्ह(ह्म)णा! अत्तणो ज्जेव मेह अस्स एदं धम्मभादुअस्स घरं होदि, ता देहि मे पवेसं, जाव दे उवज्झाअस्स धम्मं उवदिसामि (४)।

शिष्यः। [ सक्रोधम्। ] धिक् मूर्ख! किं भवान् अस्मदुपाध्यायादपि धर्मवित्तरः? (क)

---

(२) अपि च, पुरुषस्य जीवितव्यं विषमाद् भवति भक्तिगृहीतात्।
मारयति सर्वलोकं यस्तेन यमेन जीवामः॥

तस्मादिदं गृहं प्रविश्य, यमपटं दर्शयन् गायामि।

(३) अहो ब्राह्मण! कस्येदं गृहम्?

(४) अहो ब्राह्मण! आत्मीयस्यैव मे रकस्य एतत् धर्मभ्रातुर्गृहम्, तस्मात् देहि मे प्रवेशं यावत् तवोपाध्यायस्य धर्ममुपदिशामि।

---

पुरुषस्येति।—भक्तिगृहीतात् भक्त्या गृहीतात् आयत्तीकृतात् विषमात् भयङ्करादपि यमादित्यर्थः। ल्यब्लोपे पञ्चमी। तेन यमेन तदनुग्रहेण इति भावः॥ १८॥

(ह) सुगृहीतनाम्नः यस्मिन्नि कृते शुभं स्यात् स सुगृहीतनामा तस्य। तथाचोक्तं—
"स सुगृहीतनामा स्यात् यः प्रातः स्मर्य्यते जनैः" इति।

(क) धर्मवित्तमः समधिकधर्मज्ञः।

चरः। हंहो बम्ह(म्ह)णा! मा कुप्प, ण हि क्खु मह्नो सव्वं जाणादि, ता किम्पि दे उवज्झाओ जाणादि, किम्पि अम्हा-(म्हा)रिसा वि जाणन्ति (५)।

शिष्यः। [सक्रोधम्।] मूर्ख! सर्वज्ञताम् उपाध्यायस्य चोरयितुमिच्छसि [चोरयसि]।

चरः। हंहो बम्ह(म्ह)णा! जइ दे उवज्झाओ सव्वं जाणादि, जाणादु दाव, कस्स चन्दो अणभिमदो त्ति (६)।

शिष्यः। मूर्ख! किमनेन ज्ञातेन गुरोर्भविष्यति?

चरः। हंहो बम्ह(म्ह)णा! तुअ उवज्झाओ ज्जेव जाणिस्सदि जं इमिणा जाणिदेण भोदि, उज्जुअबुद्धिआ तुमं दाव इत्तिअं जाणासि, कमलाणं चन्दो अणभिमदो त्ति। णं पेक्ख,—

कमलाणं मणोहराणं वि रूआदो विसंवअइ शीलं।
संपुण्णमण्डलम्मि जाइं चन्दे विरुद्धाइं (७)॥ १९॥

---

(५) अहो ब्राह्मण! मा कुप्य, न हि, खलु सर्वः सर्वं जानाति, तत् किमपि ते उपाध्यायो जानाति, किमपि अस्मादृशा अपि जानन्ति।

(६) अहो ब्राह्मण! यदि तवोपाध्यायः सर्वं जानाति, जानातु तावत् कस्य चन्द्रोऽनभिमत इति।

(७) अहो ब्राह्मण! तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञानेन भवति, ऋजुबुद्धिस्त्वं तावत् एतावत् जानासि, कमलानां चन्द्रोऽनभिमत इति। ननु पश्य,—

कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम्।
सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि॥

---

कमलानामिति।—सुन्दराणामपि पद्मानां आकारात् चरितम् असदृशम्, रूपशीलयोः सादृश्यत्वेऽपि तदसादृश्यत्वम्, तद् यथा—सम्पूर्णमण्डलेऽपि चन्द्रे तमोभिक्रय इति भावः, यानि विसदृशानि तदुदये सङ्कोचनं तत्कान्तेरसहनेन, कुर्वन्ति इत्यनुचित स्वभावः। एतेन चन्द्रगुप्तस्य पूर्णमण्डलत्वेऽपि तस्मिन् प्रजानां विरागः अनुचित इति ध्वनिः॥ १९॥

चाण। [आकर्ण्य आत्मगतम्।] अये! चन्द्रगुप्तात् अपरक्तान् पुरुषान् जानामि इति उपक्षिप्तमनेन (ख)।

शिष्यः। मूर्ख! किमिदमसम्बद्धम् (ग) एवमभिधीयते?

चरः। हंहो बम्ह(ह्म)णा! सुसंबद्धं ज्जेव एदं भवे (८)।

शिष्यः। यदि किं स्यात्?

चरः। जइ सुणन्तं जाणन्तं अ जणं लहे (९)।

चाण। [विलोक्य।] भद्र! सुखं प्रविश, लप्स्यसे श्रोतारं ज्ञातारञ्च। [श्रोतुं जानन्तम्]

चरः। एसो प्पविसामि। [प्रविश्योपसृत्य।] जेदु, जेदु, अज्जो (१०)।

चाण। [विलोक्य आत्मगतम्।] कथं प्रभूतत्वात् (घ) कार्य्याणां, कस्य परिज्ञाने नियुक्तो निपुणक इति न ज्ञायते? आं ज्ञातम्, अये कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः। [प्रकाशम्।] भद्र! स्वागतम्? उपविश्यताम्।

चरः। जं अज्जो आणवेदि त्ति (११)। [भूमौ उपविशति।]

चाण। भद्र! उपवर्णय इदानीं स्वनियोगवृत्तान्तम्। अपि वृषलमनुरक्ताः प्रकृतयः? (ङ)।

---

(८) अहो ब्राह्मण! सुसम्बद्धमेवैतत् भवेत्।

(९) यदि शृण्वन्तं जानन्तञ्च जनं लभे। (सुणिदुं जाणन्तं इति पाठे—श्रोतुं जानन्तम् इति सं)।

(१०) एष प्रविशामि। जयति जयति आर्य्यः।

(११) यदार्य्य: आज्ञापयतीति।

---

(ख) उपक्षिप्तं कथितम्।

(ग) असम्बद्धम् असङ्गतं पूर्वापरसम्बन्धरहितमित्यर्थः।

(घ) प्रभूतत्वात् बाहुल्यात्।

(ङ) प्रकृतयः प्रधानपुरुषाः "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमरः।

चरः। अध इं ? अज्जेण क्खु तेसु तेसु विराअकारणेसु परिहरिदेसु सुगहीदणामधेए देए चन्दउत्ते दिढं अणुरत्ताओ पइदिओ। किं उण सन्ति एत्थ णअरे अमच्चरक्खसेण सह पढमं समुप्पससिणेहबहुमाणा तिण्णि पुरिसा, जे देअस्स चन्दसिरिणो सिरिं ण सहन्ति (१२)।

चाण। [सक्रोधम्।] ननु वक्तव्यं स्वजीवितं न सहन्ते इति। भद्र! अपि ज्ञायन्ते नामधेयतः?

चरः। कधं असुणिदणामधेया अज्जस्स णिवेदीअन्ति? (१३)।

चाण। तेन हि श्रोतुमिच्छामि।

चरः। सुणादु अज्जो, पढमं दाव अज्जस्स रिपुपक्खे बद्धपक्खवादो क्खवणओ (१४)।

चाण। [सहर्षमात्मगतम्।] अस्मद्रिपुपक्षे बद्धपक्षपातः (च) क्षपणकः। [प्रकाशम्] किं नामधेयो हि सः?

चरः। जीवसिद्धो णाम (१५)।

चाण। अस्मत् रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथमवगतं भवता?

चरः। जेण सा अमच्चरक्खसेण पउत्ता विसकण्णआ देए पव्वदेसरे समावेसिदा (१६)।

(१२) अथ किम्? आर्य्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः किं पुनः सन्त्यत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः, ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते।

(१३) कथमश्रुतनामधेया आर्य्यस्य निवेद्यन्ते।

(१४) शृणोतु आर्य्यः ; प्रथमं तावत् आर्य्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणकः।

(१५) जीवसिद्धिर्नामा।

(१६) येन सा अमात्यराक्षसेन प्रयुक्ता विषकन्या देवे पर्वतेश्वरे समावेशिता।

(च) बद्धपक्षपातः बद्धस्नेहः।

चाण [ स्वगतम् । ] जीवसिद्धिरेव तावत् अस्मत्प्रणिधिः । [ प्रकाशम् । ] भद्र ! अथ अपरः कः ?

चरः । अज्ज ! अवरो क्खु अमच्चरक्खसस्स पिअवअस्सो काअत्थो सअडदासो णाम (१७) ।

चाण । [ विहस्य आत्मगतम् । ] कायस्थ इति लघ्वी मात्रा (क) । तथापि न युक्तं प्राकृतमपि रिपुम् अवज्ञातुम् । तस्मिन् मया सुहृच्छद्मना सिद्धार्थको निक्षिप्तः । [ प्रकाशम् । ] भद्र ! तृतीयं श्रोतुमिच्छामि ।

चरः । [ विहस्य । ] तदिओ वि अमच्चरक्खसस्स दुदीअं विअ हिअअं, पुप्फउरवासी, मणिआरसेट्ठी चन्दणदासो णाम, जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो (१८) ।

चाण । [आत्मगतम् ।] नूनं सुहृत्तमः न हि अनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति । [ प्रकाशम् । ] भद्र ! चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता ?

चरः । अज्ज ! इअं अंगुलीअमुद्दा अज्जं अवगमइस्सदि [अज्जं अवगदत्थं करिस्सदि] (१९) [ इति मुद्राम् अर्पयति । ]

---

(१७) आर्य ! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम ।

(१८) तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं, पुष्पपुरनिवासी, मणिकारश्रेष्ठी, चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो, नगरादपक्रान्तः ।

(१९) आर्य ! इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति । (अज्जं अवगमइस्सदि इति पाठे—आर्यमवगमयिष्यति इति सं ) ।

---

(क) लघ्वी मात्रा क्षुद्रः अंशः, हीनजातित्वात् हीनबुद्धिरयं हीनबुद्धिना कियती अपकृतिः साध्यते इति अवज्ञासूचकमिदमिति भावः ।

चाण । [ मुद्रामवलोक्य गृहीत्वा, वाचयति ] नाम राक्षसस्य । [सहर्षं स्वगतम् ।] ननु राक्षस एव अस्मत् अङ्गुलिप्रणयी संवृत्त ( ञ ) इति । [ प्रकाशम् ] । भद्र ! अङ्गुलिमुद्राधिगमं प्रकाशेन श्रोतुमिच्छामि ।

चरः । सुणादु अज्जो, अत्थि दाव अहं अज्जेण पउरजणचरिददंसणे णिउत्तो, तदो परघरप्पवेसे परस्स अणासंकणीएण, इमिणा जमपडेणाहिण्डन्तो, ( झ ) मणिआरसेट्ठिणो चन्दणदासस्स घरं पविट्ठोम्हि, तहिं जमपडं पसारिअ, पउत्तोम्हि गीदाइं गाइदुं (२०) ।

चाण । ततस्ततः ?

चरः । तदो, एक्कादो आवरकादो ( ञ ) पञ्चवरिसदेसीओ प्पिअदंसणीअसरीराकिदी कुमारओ, बालजणसुलहकोदूहलोप्फुल्लणअणजुअलओ णिक्कमिदुं पउत्तो, तदो हा णिग्गदो, हा णिग्गदोत्ति, संकापरिग्गहणिभ्भदगुरुओ तस्स ज्जेव्व आवरकस्स अब्भंतरे उत्थिदो महन्तो कलअलो । तदो इसि दुआरदेसदाविदमुहीए एक्काए इत्थिआए, सो कुमारओ णिक्कमन्तो ज्जेव्व णिव्भच्छिअ अवलम्बिदो कोमलाए बाहुलदाए, तस्साअ कुमारसंरोहसंभमप्पचलिदंगुलिदो

(२०) शृणोतु आर्य्यः, अस्ति तावदहमार्य्येण पौरजनचरितदर्शने नियुक्तः, ततः परगृहप्रवेशे परस्यानाशङ्कनीयेन अनेन यमपटेन आहिण्डमानो, मणिकारश्रेष्ठिनः चन्दनदासस्य गृहं प्रविष्टोऽस्मि, तत्र यमपटं प्रसार्य्य प्रवृत्तोऽस्मि गीतानि गातुम् ।

(ञ) अङ्गुलिप्रणयी संवृत्त इति अङ्गुलिप्रणयी हस्तगत इति यावत् ।

(झ) आहिण्डमानः भ्रमन्नित्यर्थः ।

(ञ) आवरकात् आवरणतः यवनिकाया इत्यर्थः ।

करादो पुरिसंगुलिपरिणाहप्पमाणघडिआ (ट) विअलिदा इअं अङ्गुलीमुद्दिआ देहलीबन्धम्मि णिपडिआ, ताए इत्थिआए अणवबुज्झन्त ज्जेव्व, मम चलणपासं समागच्छिअ, पणामणिहुआ णव-वहुव्व णिच्चला संवुत्ता, मए वि अमच्चरक्खसस्स णामंकिदेति अज्जस्स पादमूलं पाविदा, ता एसो इमाए मुद्दाए आगमो त्ति (२१)।

चाण। भद्र! श्रुतम्, अपसर, न चिरादस्य परिश्रमस्यानुरूपं फलमधिगमिष्यसि।

चरः। जं अज्जो आणवेदि त्ति (२२)। [ निष्क्रान्तः। ]

चाण। शार्ङ्गरव! शार्ङ्गरव!

[ प्रविश्य शिष्यः। ] उपाध्याय! आज्ञापय।

चाण। वत्स! मसी भाजनं [ पात्रं ]पत्रञ्च उपानय।

(२१) ततश्च एकस्मात् आवरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारो, बालजनसुलभकौतूहलोत्फुल्लनयनयुगलो निष्क्रमितुं प्रवृत्तः, ततो हा निर्गतो हा निर्गत इति (शङ्कापरिग्गहं णिवेदन्त इति पाठे—शङ्कापरिग्रहं निवेदयन् इति स०) शङ्कापरिग्रहनिभृतगुरुकस्यैव आवरकस्याभ्यन्तरे उत्थितो महान् कलकलः। तत ईषद्द्वारदेशदापित (दत्त) मुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया। तस्याश्च कुमारसंरोधसम्भ्रमप्रचलिताङ्गुलितः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे निपतिता, तया स्त्रिया अनवबुध्यमानैव, मम चरणपार्श्वं समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता, मयापि अमात्यराक्षसस्य नामाङ्कितेति आर्य्यस्य पादमूलं प्रापिता, तदेषोऽस्या मुद्राया आगम इति।

(२२) यदार्य्य आज्ञापयति इति।

(ट) पुरुषाङ्गुलिपरिणाहप्रमाणघटिता पुरुषस्य अङ्गुलीयः परिणाहः विस्तारः तस्य प्रमाणेन परिमाणेन घटिता निर्मिता, तेन ततः कामाङ्गुलीः स्त्रीकराद् गलनसम्भव इति भावः।

शिष्यः । यत् आज्ञापयति उपाध्यायः । [ इति निष्क्रम्य पुनः प्रविश्य । ] उपाध्याय ! इदं मसी-भाजनं [ पात्रं ] पत्रञ्च ।

चाण । [ गृहीत्वा स्वगतम् । ] किमत्राभिलिखामि ? अनेन खलु लेखेन राक्षसो जेतव्यः ।

[ प्रविश्य प्रतीहारी । ] जेदु, जेदु, अज्जो (२३) ।

चाण । [ सहर्षमात्मगतम् । ] गृहीतोऽयं जयशब्दः । (ठ) [ प्रकाशम् । ] शोणोत्तरे ! किम् आगमनप्रयोजनम् ?

प्रती । अज्ज ! कमलमुउलाआरमञ्जलिं सीसे णिवेसिअ देओ चन्दसिरी अज्जं विण्णवेदि । इच्छामि अहं, अज्जेण अब्भणुण्णादो, देअस्स पव्वदेसरस्स पारलोइअं कादुं, तेण अ धारिदपूव्वाइं आभरणाइं गुणवन्ताणं वह्म(म्ह)णाणं पड़िवादेमि त्ति (२४) ।

चाण । [ सहर्षमात्मगतम् । ] साधु वृषल ! साधु, ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि । [ प्रकाशम् । ] शोणोत्तरे ! उच्यताम् अस्मद्वचनाद् वृषलः, साधु वत्स ! साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां, तदनुष्ठीयताम् आत्मनोऽभिप्रायः, किन्तु पर्वतेश्वरधृतपूर्वाणि भूषणानि गुणवन्ति

(२३) जयति जयति आर्य्यः ।

(२४) आर्य्य ! कमलमुकुलाकारमञ्जलिं शीर्षे निवेश्य देवश्चन्द्रश्रीरार्य्यं विज्ञापयति । इच्छाम्यहमार्य्येण अभ्यनुज्ञातो, देवस्य पर्वतेश्वरस्य पारलौकिकं कर्त्तुम्, तेन च धारितपूर्वाणि आभरणानि गुणवतां ब्राह्मणानां प्रतिपादयामीति ।

(ठ) राक्षसजयार्थम् लेख्यं लिखित्वोद्यतवति चाणक्ये प्रतीहार्य्या उक्तिः जयार्थसम्वलिता अभिश्रुता तेन इत्यभीष्टजयशब्दश्रवणात् "गृहीतोऽयं जयशब्दः" इत्युक्तवान् ; एतद् नाट्योक्तपताकास्थानकम् ।

गुणवन्ति एव ब्राह्मणेभ्यः प्रतिपादनीयानि. तत् एषोऽहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामि। (ड)

प्रती। जं अज्जो आणवेदि त्ति (२५)। [ निष्क्रान्ता। ]

चाण। शार्ङ्गरव! शार्ङ्गरव! उच्यताम् अस्मद्वचनात् विश्वावसुप्रभृतयः त्रयो भ्रातरः, यथा वृषलात् प्रतिगृह्याभरणानि भवद्भिः अहं द्रष्टव्य इति।

शिष्यः। यत् आज्ञापयति उपाध्याय इति। [निष्क्रान्तः।]

चाण। [स्वगतम्।] उत्तरोऽयं (ढ) लेखार्थः, पूर्वः कतमोऽस्तु। [ विचिन्त्य। ] आं ज्ञातः, उपलब्धवानस्मि प्रणिधिभ्यो, यथा तस्य म्लेच्छराजबलस्य मध्यात् प्रधानतमाः पञ्च राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते। तद्यथा,——

कौलूतश्चित्रवर्मा, मलयनरपतिः सिंहनादो नृसिंहः,
काश्मीरः पुष्कराक्षः, क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः।
मेघाक्षः पञ्चमोऽस्मिन् पृथुतुरगबलः पारसीकाधिराजो,
नामान्येषां लिखामि ध्रुवमहमधुना चित्रगुप्तः प्रमार्ष्टु ॥२०॥

---

(२५) यत् आर्य्य आज्ञापयतीति।

---

(ड) गुणवन्ति बहुमूल्यत्वसुदृश्यत्वादिगुणयुक्तानि अतएव गुणवद्भ्य एव देयानि सदृशैरेव योगस्योचितत्वादिति सूचयता चाणक्येन पात्रभूतेन स्वप्रणिधिभूतेन विश्वावसुप्रभृतिभ्रातृत्रयेण तदलङ्करणं चन्द्रगुप्तहस्तगतमपि प्रतिगृह्य छलेनानीय राक्षसस्य समीपे वणिग्द्वारा प्रेषणीयमित्याशयेन प्रतिपादनीयानीत्युपदिष्टम्। प्रेषयामीत्यत्र भविष्यत्सामीप्ये लट् प्रेषयिष्यामीत्यर्थः।

(ढ) उत्तरोऽयमिति उत्तरः शेषांश इत्यर्थः।

तानेव दर्शयन् तेषु कर्त्तव्यदोषारोपणस्याशक्यमनुच्छेदतामाह—कौलूत इति। कुलूतदेशपतिः चित्रवर्मा नाम, नृसिंहः नरश्रेष्ठः मलयाधिपतिः सिंहनादो नाम, काश्मीरदेशाधिराजः पुष्कराक्षो नाम, क्षतरिपुमहिमा शत्रुन्दमः सिन्धदेशाधिपतिः सिन्धुषेणो नाम, पृथुतुरगबलः प्रशस्ताश्वसादिबलः पारसीकदेशपतिः मेघाक्षो नाम,

[ विचिन्त्य । ] अथवा न लिखामि, सर्वमनभिव्यक्तमेव तावदास्ताम् । [ प्रकाशम् । ] शार्ङ्गरव ! शार्ङ्गरव !

[ प्रविश्य शिष्यः । ] उपाध्याय ! आज्ञापय ।

चाण । वत्स ! श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति, तत् उच्यताम् अस्मद्वचनात् सिद्धार्थकः । [ कर्णे कथयित्वा । ] एभिः अक्षरैः केनापि, किमपि, कस्यापि, स्वयं वाच्यमिति, अदत्तवाह्यनामानं लेखं शकटदासेन लेखयित्वा, माम् उपतिष्ठस्व, न च आख्येयम् (थ) अस्मै चाणक्यो लेखयतीति ।

शिष्यः । यत् आज्ञापयति उपाध्यायः । [इति निष्क्रान्तः । ]

चाण । [ स्वगतम् । ] हन्त जितो मलयकेतुः ।

[ प्रविश्य लेखहस्तः सिद्धार्थकः ।] जेदु, जेदु, अज्जो । अज्ज ! अअं सो सअडदासेण सहत्थलिहिदो लेहो । [ मह वअणेण अविचालिअ ] (२६) ।

चाण । [ गृहीत्वा निरीक्ष्य । ] अहो दर्शनीयताक्षराणाम् । [ इति अनुवाच्य । ] भद्र ! अनया मुद्रया मुद्रय (त) एनम् ।

सिद्धा । जं अज्जो आणवेदि त्ति । [तथा कृत्वा । ] अज्ज !

(२६) जयति जयति आर्य्यः । आर्य्य ! अयं सः शकटदासेन स्वहस्तलिखितो लेखः । [मह वअणेण अविचालिअ इत्यधिकपाठे—मम वचनेनाविचार्य्य ] ।

एते पूर्वोक्ताः पञ्च राजानः । अहमेषां नामानि अत्र भेदपत्रे लिखामि, अधुना चित्रगुप्तः यमः तत्सचिवो वा ध्रुवं निश्चितं प्रमार्ष्टुं शोधयतु त्यजतु इति यावत्, अहमेव तेषां शासिता भविष्यामि चित्रगुप्तप्रयासोऽत्र निष्फल इति भावः । अत्रापि स्रग्धरावृत्तम् ॥२०॥

(थ) न च आख्येयमिति—आख्येयं वाच्यम् ।

(त) अनया राक्षसनामाङ्कितया मुद्रया मुद्रय अङ्कय ।

अअं सो मुद्दिदो लेहो, ता आणवेदु अज्जो किं अवरं अणुचिट्ठीअदु त्ति (२७) ।

चाण। भद्र! कस्मिंश्चित् आत्मनानुष्ठेये कर्मणि त्वां व्यापारयितुम् (थ) इच्छामि ।

सिद्धा। [सहर्षम् ।] अज्ज! अणुग्गहिदोम्हि, ता आणवेदु अज्जो, किं इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वं (२८) ।

चाण। भद्र! प्रथमं तावत् वध्यस्थानं गत्वा घातका: सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहयितव्या:, ततस्तेषु गृहीतसंज्ञेषु भयापदेशात् इतस्तत: प्रद्रुतेषु (द) शकटदासो वध्यस्थानात् अपनीय, राक्षसं प्रापयितव्य:, तस्माच्च सुहृत्प्राणरक्षणपरितुष्टात् पारितोषिकं (ध) ग्राह्यं, राक्षस एव कश्चित्

(२७) यत् आर्य्य आज्ञापयतीति । आर्य्य! अयं स मुद्रितो लेख:, तत् आज्ञापयतु आर्य्य: किमपरमनुष्ठीयतामिति ।

(२८) आर्य्य! अनुगृहीतोऽस्मि, तदाज्ञापयतु आर्य्य:, किमनेन दासजनेन आर्य्यस्य अनुष्ठातव्यम् ।

(थ) व्यापारयितुं नियोक्तुम् ।

(द) वध्यस्थानमिति ।—शकटदासस्य शूलारोपणे कपटव्यवहार: न यथार्थ: इति तत्स्थानात् मदुपदिष्टेङ्गितै: चाण्डालौ अपसार्य्यौ । इत्थं तत्प्राणरक्षासम्भव: तस्मै विशेषकार्य्यसिद्धि: इत्याशय: । दक्षिणाक्षिसङ्कोचसंज्ञां दक्षिणनेत्रसङ्कोचसङ्केतम् । भयापदेशात् भयच्छलात् तत्स्थानादपसरणं व्यञ्जयित्वा प्रस्थितयो: तयो: वधार्हस्य शकटदासस्य तत: राक्षससमीपानयनेन मत्सुहृदागतं भवदानीतं मित्रं निरीक्ष्य त्वयि विश्वास: सुतरां सेत्स्यतीति इत्याशय: । प्रद्रुतेषु पलायितेषु ।

(ध) पारितोषिकमिति तस्यैव सुवर्णदाने प्रचारोपयोगिताऽग्रे दर्शयिष्यते ।

कालं सेवितव्यः, ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजनमिदम् अनुष्ठेयम्। [ कर्णे एवमेवम्। ] (न)

सिद्धा। जं अज्जो आणवेदि त्ति (२८)।

चाण। शार्ङ्गरव! शार्ङ्गरव!

[ प्रविश्य शिष्यः। ] उपाध्याय! आज्ञापय।

चाण। उच्यतां मद्वचनात् कालपाशिको, दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति, य एष क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तो विषकन्यया पर्वतेश्वरं घातितवान् स एनमेव दोषं प्रख्याप्य, सनिकारं नगरात् निर्वास्यतामिति। (प)

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति परिक्रामति।]

चाण। वत्स! तिष्ठ तिष्ठ, योऽयमपरः कायस्थः शकटदासो नाम, राक्षसप्रयुक्तो, नित्यम् अस्मच्छरीरम् (फ) अभिद्रोग्धुमिह प्रयतते, स चापि एनं दोषं प्रख्याप्य, शूलमारोप्यतां (ब) गृहजनश्च अस्य बन्धनागारे प्रवेश्यतामिति।

---

(२८) यदार्य्य आज्ञापयतीति।

---

(न) तेन पारितोषिकेण यत् कर्त्तव्यं यच्च अकर्त्तव्यम् तत्सर्वं कर्णे आह—एवमेवमिति पञ्चमाङ्के वक्ष्यमाणमुद्राद्व्यापारसङ्कुलम्।

(प) जीवसिद्धेर्निर्वासनम् आत्मकृतपर्व्वतेश्वरवधस्य राक्षसकृततया ख्यापनार्थं, निष्काशितेन च तेन मलयकेतुसमीपे राक्षसेनैव पर्व्वतेश्वरो हतो न चाणक्येनेत्यस्यार्थस्य ख्यापनार्थञ्च।

(फ) अस्मच्छरीरमिति अस्मच्छरीरमिव प्रेष्ठं चन्द्रगुप्तमिति भावः।

(ब) शकटदासस्य शूलारोपणव्यपदेशेन भयमुत्पाद्य सिद्धार्थकेन तद्रक्षणं राक्षसस्य विश्वासोत्पादनार्थं, तेन वक्ष्यमाणमित्रभेदोपायसाधनं स्वाभीष्टलाभाय योजितः।

शिष्यः । यत् आज्ञापयति उपाध्याय इति । [ निष्क्रान्तः । ]

चाण । [ चिन्तां नाटयित्वा स्वगतम् । ] अपि नाम दुरात्मा राक्षसो गृह्येत ? (भ)

सिद्धा । अज्ज ! गहीदो (३०) ।

चाण । [ सहर्षमात्मगतम् ] (म) हन्त गृहीतो राक्षसः । [ प्रकाशम् ] भद्र ! कोऽयं गृहीतः ?

सिद्धा । गहीदो मए अज्जस्स सन्देसो, ता गमिस्सं अहं कज्जसिद्धीए (३१) ।

चाण । [ साङ्गुलिमुद्रं लेखमर्पयित्वा । ] भद्र ! सिद्धार्थक ! गम्यताम्, अस्तु ते कार्य्यसिद्धिः ।

सिद्धा । जं अज्जो आणवेदि त्ति ( ३२ ) । [ प्रणम्य-निष्क्रान्तः । ]

[ प्रविश्य शिष्यः । ] उपाध्याय ! कालपाशिको, दण्ड-पाशिकश्च उपाध्यायं विज्ञापयतः । इदम् अनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति ।

चाण । शोभनम् । वत्स ! मणिकारश्रेष्ठिनं चन्दनदासम् इदानीं द्रष्टुमिच्छामि ।

शिष्यः । यत् आज्ञापयति उपाध्याय इति । [ निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य । ] इत इतः श्रेष्ठिन् !

---

( ३० ) आर्य्य ! गृहीतः ।

( ३१ ) गृहीतो मया आर्य्यस्य सन्देशः, तद्गमिष्यामि अहं कार्य्यसिद्धौ ।

(३२) यदार्य्य आज्ञापयतीति ।

---

(भ) गृह्येत इत्यत्र सम्भावनायां लिङ् ।

(म) दुरात्मा राक्षसः गृहीतो भवेन्न वा इति चिन्तयतः चाणक्यस्य गृहीत इति शिष्यात्मकवाक्यश्रवणेन प्रभूतहर्षोदयः सञ्जातः ।

चन्दनदासः । [ स्वगतम् । ]

चाणक्के म्हि अअरुणे, सहसा सद्दाविदस्स (य) लोअस्स ।
वड्ढइ णिद्दोसस्स वि सङ्का, किं उण मह जाददोसस्स ? ॥

ता भणिदा मए धनसेणप्पमुहा तिण्णि वाणिजिआ। जधा कदावि चाणक्कहदओ गेहं मे विचिणावेदि, ता अवहिदा णिव्वहध (र) भट्टिणो अमच्चरक्खसस्स घरअणं, मह दाव जं होदि तं होदु त्ति (२३)।

शिष्यः। भोः श्रेष्ठिन् ! इत इतः।

चन्द। अअं आगदोम्हि (२४)। [उभौ परिक्रामतः। ]

शिष्यः। उपाध्याय ! अयं श्रेष्ठी चन्दनदासः।

चन्द। [ उपसृत्य। ] जेदु जेदु अज्जो (२५)।

चाण। [ नाट्येन अवलोक्य। ] भोः श्रेष्ठिन् ! स्वागतम्, इदमासनम् आस्यताम्।

चन्द। [ प्रणम्य। ] किं ण जाणादि अज्जो, जहा अणुचिदो उवआरो (ल) [ सहिअअस्स ] परिहवादोवि महन्तं

---

(२३) चाणक्येऽस्मिन् अकरुणे, सहसा शब्दायितस्य लोकस्य।
वर्द्धते निर्दोषस्यापि शङ्का किं पुनर्मम जातदोषस्य ? ॥

तद्भणिता मया धनसेनप्रमुखास्त्रयो वाणिजिकाः, यथा कदापि चाणक्यहतको गेहं मे विचिनोति तदवहिता निर्वहत भर्त्तुः अमात्यराक्षसस्य गृहजनं, मम तावत् यद्भवति तद्भवतु इति।

(२४) अयमागतोऽस्मि। 

(२५) जयति जयति आर्य्यः।

---

(य) अकरुणे निर्दये चाणक्ये विषये समधिकृत्य, शब्दायितस्य चाणक्येन आहूतस्य।

(र) निर्वहत निष्काशयत, अन्तःपुरात् स्थानान्तरं प्रापयत इत्यर्थः।

(ल) उपचारः अभ्यर्थनादिरूप आदरः।

दुःखमुप्पादेदि, ता इध ज्जेव अहं उचिदाए भूमीए उवविसामि (२६)।

चाण। भोः श्रेष्ठिन्! मा मा एवम्, उचितमेवैतत् अस्मद्विधैः सह भवतः, तदुपविश्यताम् आसन एव।

चन्द। [स्वगतम्] उपलक्खिदमणेण (व) किम्पि। [प्रकाशम्।] जं अज्जो आणवेदि त्ति (२७)। [उपविष्टः।]

चाण। भोः श्रेष्ठिन्! चन्दनदास! अपि प्रचीयन्ते (श) संव्यवहाराणां लाभा वः?

चन्द। अज्ज! अध इं? अज्जस्स प्पसाएण अखण्डिदा मे वाणिज्जा (ष) (२८)।

चाण। भोः श्रेष्ठिन्! अपि 'कदाचित् चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः? (स)

चन्द। [कर्णौ पिधाय।] सन्तं पावं (ह)। सरअणिसा-

---

(२६) किं न जानाति आर्य्यः, यथानुचित उपचारः, [ सहिदअस्स इति अधिकपाठे—सहृदयस्य ] परिभवादपि महद्दुःखमुत्पादयति, तत् इहैव अहं उचितायां भूमौ उपविशामि।

(२७) उपलक्षितमनेन किमपि। यदार्य्य आज्ञापयति इति।

(२८) आर्य्य! अथ किम्? आर्य्यस्य प्रसादेन अखण्डिता मे वाणिज्या:

---

(व) उपलक्षितमिति मद्दोषमपराधं ज्ञातं यतः अस्मद्विधैः सह इत्यादि कथितम्।

(श) प्रचीयन्ते वर्द्धन्ते।

(ष) सिद्धविषयस्वीकारसूचकं पदद्वयमिदं, तदेव प्रकटयन् आह—आर्य्यस्य प्रसादेनेत्यादि।

(स) अतिक्रान्तेति।—चन्द्रगुप्तादधिकान् सौजन्योज्ज्वलकान् अतीतनन्दादिपार्थिवगुणान् इत्यर्थः। प्रकृतीः प्रकृतिभिरित्यर्थः स्मरणस्य ज्ञानविशेषार्थकतया तद्योगे प्रयोज्यकर्त्तरि कर्म्मसंज्ञाभावात् कवीनां निरङ्कुशतया प्रयोगः।

(ह) शान्तं पापं "शान्तं पापमनिष्टंभवेत्" इति वचनात् अवाच्यार्थे शान्तं

समुग्गमेण विअ पुण्णिमाचन्देण, चन्दसिरिणा अहिअं णंदन्ति पइदीओ (३९)।

चाण। भोः श्रेष्ठिन्! यदि एवं प्रीताभ्यः प्रकृतिभ्यः प्रियमिच्छन्ति राजानः।

चन्द। आणवेदु अज्जो। किं, कित्तिअं वा अत्थजादं इमादो जणादो इच्छीअदि त्ति (४०)। (क)

चाण। भोः श्रेष्ठिन्! चन्द्रगुप्तराज्यमिदं, न नन्दराज्यं, यतो नन्दस्य एवार्थरुचेः अर्थसम्बन्धः प्रीतिमुत्पादयति, चन्द्रगुप्तस्य तु भवताम् अपरिक्लेश एव।

चन्द। [सहर्षम्।] (ख) अज्ज! अणुग्गहिदोम्हि (४१)।

चाण। भोः श्रेष्ठिन्! स च अपरिक्लेशः कथम् आविर्भवतीति न पुनः प्रष्टव्याः स्मो भवता (ग)?

---

(३९) शान्तं पापं, शारदनिशासमुद्गमेन इव पूर्णिमाचन्द्रेण, चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः।

(४०) आज्ञापयतु आर्यः। किं कियद्वा अर्थजातमस्माज्जनादिष्यत इति।

(४१) आर्य! अनुगृहीतोऽस्मि।

---

पापमिति प्रयुज्यते माल्ये, न वाच्यमित्यर्थः अश्राव्यश्रवणे लोके राम रामेत्यनुवादवदाभासः।

(क) मत्तः किं प्रार्थ्यते इत्याशयः।

(ख) अर्थाकाङ्क्षित्वोक्त्या उदात्ताशयात् चन्द्रगुप्तात् स्वार्थहानेरभावस्मरणात् चन्दनदासस्य हर्षः।

(ग) अन्यधर्मस्य दुःखाभावस्यान्येन बोधः दुष्करः इति व्यञ्जकहेतुनैव तस्यानुमितिः इति दर्शयन्नाह—सचापरिक्लेश इत्यादि। स कथं व्यज्यते इत्याद्यभिव्यक्तिप्रकारः एव भवता अस्माभिः वयं न पुनः प्रष्टव्याः जिज्ञासितव्याः? अपितु प्रष्टव्याएव, अत्र काकुः। तथाच प्रकृतीनाम् अपरिक्लेशव्यञ्जकः को हेतुरिति भवता मां प्रति प्रष्टव्यमेव इत्याशयः।

चन्द। आणवेदु अज्जो (४२) (घ)।

चाण। संक्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिः वर्त्तितव्यम् (ङ)।

चन्द। अज्ज! को उण अधण्णो, [जो राअविरुद्धो त्ति] अज्जेण अवगच्छीअदि? (४३)।

चाण। भवान् एव तावत् प्रथमः।

चन्द। [कर्णौ पिधाय।] सन्तं पावं, सन्तं पावं, कीदिसो तिणाणं अग्गिणा सह विरोहो? (च) (४४)।

चाण। अयम् ईदृशो विरोधो, यत् त्वम् अद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहम् अभिनीय रक्षसि।

चन्द। अज्ज! अलीअं एदं, केणावि अणज्जेण अज्जस्स णिवेदिदं (४५)।

---

(४२) आज्ञापयतु आर्य्यः।

(४३) आर्य्य! कः पुनरधन्य आर्य्येणावगम्यते? [जो राअविरुद्धो त्ति] इति पाठे—यो राजविरुद्धः। [राअ] इत्यत्र [राअम्मि] [रात्रा] च क्वचित् पाठः, राज्ञि राजविषये, राज्ञा सह वा इति सं।

(४४) शान्तं पापं शान्तं पापं, कीदृशस्तृणानामग्निना सह विरोधः?

(४५) आर्य्य! अलीकमेतत्, केनापि अनार्य्येण आर्य्यस्य निवेदितम्।

---

(घ) अपरिज्ञाशहेतुप्रश्नाय चाणक्येन नियोजितः चन्दनदासः पृच्छति—आज्ञापयत्विति। वदतु भवान् अपरिज्ञाश व्यञ्जकः को हेतुः इत्याशयः।

(ङ) संक्षेपत इति।—संक्षेपतः समासतः राजनि अविरुद्धाभिः अनुकूलाभिर्वृत्तिभिर्व्यवहारैरपरिज्ञाश आविर्भवतीत्यनुक्तष्टार्थः। प्रतिकूलाचरणस्य परिज्ञाशव्यञ्जकत्वं सिद्धम्। वृत्तिभिर्व्यवहारैः। [वर्त्तितव्यम् इत्यधिकपाठः, तत्पाठे—तादृशीभिर्वृत्तिभिर्युष्माभिः वर्त्तितव्यं व्यवहर्त्तव्यं तत्परिज्ञाशाभिव्यञ्जकमित्यर्थः]।

(च) अत्र दृष्टान्तालङ्कारः।

चाण। भोः श्रेष्ठिन्! अलम् आशङ्कया, भीताः पूर्वराजपुरुषाः पौराणाम् अनिच्छताम् अपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति, ततः तत्प्रच्छादनम् (छ) एव दोषम् उत्पादयति।

चन्द। एव्वं स्मेदं। तस्सिं समये आसी अह्म(म्ह)घरे अमच्चरक्खसस्स घरअणो (४६)।

चाण। प्रथमम् अनृतमिदानीम् आसीदिति परस्परविरोधिनी वचने। (ज)

चन्द। एत्तिअं ज्जेव अत्थि मे वाआच्छलं (झ) (४७)।

चाण। भोः श्रेष्ठिन्! चन्द्रगुप्ते राजनि न परिग्रहः छलानां, तत् समर्पय राक्षसस्य गृहजनमच्छलं भवतु भवतः।

चन्द। अज्ज! णं विस्सवेमि, तस्सिं समये आसी अह्म(म्ह)घरे अमच्चरक्खसस्स घरअणो त्ति(४८)।

चाण। अथ इदानीं क्व गतः?

चन्द। ण जाणामि कहिं गदो त्ति (४९)

(४६) एवं न इदम्। तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः।

(४७) एतावदेवास्ति मे वाक्छलम्।

(४८) आर्य्य! ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

(४९) न जानामि कुत्र गत इति।

(छ) तत्प्रच्छादनं तस्य प्रच्छादनं गोपनम्।

(ज) प्रथमम् अलीकमेतदिति कथनेन स्वनिकेतने राक्षसगृहजनस्य स्थितिरित्यसत्योक्ता, इदानीं आसीदिति कथनेन समय विशेषे स्थितिरुक्ता इत्यनयोर्वचनयोः परस्परविरोधिता इति भावः।

(झ) "छलं निरस्तभूते" इति स्मृतेः कपटम नरेन्द्राऽग्राह्यम् इति प्रकटयन् ब्रवीति—एत्तिअमिति। एतावत् पूर्व्वापरविरोधरूपं वाक्छलं न तु तत्कृतनिह्नवरूपापराधः।

चाण। [स्मितं कृत्वा।] कथं न ज्ञायते नाम? भोः श्रेष्ठिन्! शिरसि फणी, दूरे तत्प्रतीकारः। अन्यच्च नन्दमिव विष्णुगुप्तः—"। [इति अर्द्धोक्तौ लज्जां नाटयित्वा।] (ञ)

चन्द। [स्वगतम्।]

उवरि घणाघणथणिअं दूरे दइआ किमेदमावडिअम्।
हिमवदि दिव्वोसहिओ सीसे सप्पो समाविट्ठो (५०) ॥२१॥

चाण। "—चन्द्रगुप्तम् अमात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्थाः! पश्य,—

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीवक्रनासादिभिः
नन्दे जीवति, या तदा न गमिता स्थैर्य्यं चलन्ती मुहुः।

---

(५०) उपरि घनाघनस्तनितं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः॥

---

(ञ) शिरसि फणीति।—फणी सर्पः तत्सदृशः असह्यविक्रमो राजदण्ड इत्यर्थः, तत्प्रतीकारः तस्य राजदण्डरूपस्य फणिनः प्रतीकारः दूरे वर्त्तते इति शेषः। अयं भावः,—अस्य निवारणोपायः राक्षसेन चन्द्रगुप्तहननं तत्प्रत्याशा दूरवर्त्तिनी फलिष्यति न वा इति संशय एव। तथाच "उपस्थितं परित्यज्य योऽध्रुवं तु विचिन्तयेत्" इत्युक्तरीतिरागतेति भावः। विष्णुगुप्तश्चाणक्यः। स्वकृतनन्दहननस्य उपमानतया स्वेन कथनमतीवानुचितमित्यतश्चाणक्यस्य लज्जा।

उपरीति।—घनाघनस्तनितं "शक्रादौ घनाघनः" इति निपातितस्य घनाघनस्य वर्षकमेघस्य, यद्वा घनस्य मेघस्य अघनस्तनितं नास्ति घनं यस्मात् तत् अघनं तत् स्तनितं शब्दितम् अतिघोरगर्जितमित्यर्थः, उपरि वर्त्तते इति शेषः, दयिता प्रिया दूरे तिष्ठतीति शेषः, एतत् किम आपतितम् उपस्थितं, विरहिणां मेघध्वनिः अतीवोद्दीपकत्वात् कष्टकर इति भावः; तत्प्रतीकारस्तु प्रियासङ्गम एव, तस्या दूरस्थितेः कथञ्चन न सम्भवः, एवं शीर्षे सर्पः समाविष्टः दंशनार्थमुपविष्ट इत्यर्थः, तत प्रतीकारोपायभूता दिव्यौषधयः हिमवति हिमालये अतिदूरे इत्यर्थः सन्तीति शेषः। अयं भावः,—रोगः सङ्कटभावेन उपस्थितः किन्तु तदौषधस्य दूरवर्त्तित्वात् सुतरां प्रतीकारासम्भव इति ॥ २१ ॥

विक्रान्तैरिति।—विक्रान्तैः विक्रमशालिभिः, नयशालिभिः नीतिज्ञैः सुसचिवैः

तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्त्तुं व्यवस्येत् पृथक् ॥२२॥

अपिच, [ आस्वादितेत्यादि प्रागुक्तं पठति । ]

चन्द । [स्वगतम् । ] फलेण संपादिदं सोहदि दे विकत्थिदं (५१) (ट) ।

[ नेपथ्ये उत्सारणा ( ठ ) क्रियते । ]

चाण । शार्ङ्गरव ! ज्ञायतां किमेतत् ।

शिष्यः । यत् आज्ञापयति उपाध्यायः । [ इति निष्क्रम्य, पुनः प्रविश्य ।] उपाध्याय ! एष राज्ञः चन्द्रगुप्तस्य आज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरात् निर्वास्यते । (ड)

चाण । क्षपणकः ! अहह, अथवा अनुभवतु राजापथ्यकारित्वस्य फलम् । भोः श्रेष्ठिन् ! चन्दनदास ! एवमयं, राजापथ्यकारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं (ढ)

---

(५१) फलेन सम्पादितं शोभते ते विकत्थितम् ।

---

सुमन्त्रिभिः वक्रनासादिभिः प्रधानपुरुषैः जीवति नन्दे मुहुः वारंवारं चलन्ती चलितचञ्चला कुराजाश्रयादिति भावः, या श्रीः राजलक्ष्मीः स्थैर्यं न गमिता न प्रापिता न स्थिरीकृतेत्यर्थः, कौ जनः जगत् प्रह्लादयन्तीम् उल्लासयन्तीं द्युतिं चन्द्रिकामिव एकत्वमुपागतां स्थिरत्वमापादितां सञ्जीत्या इति शेषः, तां श्रियं चन्द्रादिव चन्द्रगुप्तनृपतेः पृथक् कर्त्त दूरीकर्त्तुं व्यवस्येत् प्रयतेत, न कोऽपि तत् कर्त्तुं शक्नुयादित्यर्थः । अत्र सम्भावनायां लिङ् । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

(ट) सम्पादितमित्यत्र संवादितमिति पाठे—प्रकटितम् । विकत्थितम् आत्मनः श्लाघा ।

(ठ) उत्सारणा लोकानां सम्मर्दनिवारणार्थमपसारणा ।

(ड) सनिकारं सापमानम् । निर्वास्यते देशान्तरं प्रस्थाप्यते ।

(ढ) पथ्यं हितम् ।

सुहृदश्च:, समर्प्यतां राक्षसगृहजन:, चिरमनुभूयन्तां विचित्रा राजप्रसादा: ।

चन्द । णत्थि मे गेहे अमच्चरक्खसघरअणो ( ५२ ) ।

[ ततो नेपथ्ये कलकल: । ]

चाण । शार्ङ्गरव ! ज्ञायतां पुन: किमेतत् ।

शिष्य: । यत् आज्ञापयति उपाध्याय: । [ इति निष्क्रम्य, पुन: प्रविश्य । ] उपाध्याय ! असौ राजाज्ञया राजापथ्यकारी कायस्थ: शकटदास: शूलम् आरोपयितुं नीयते ।

चाण । स्वकर्मफलभाक् भवतु । भो: श्रेष्ठिन् ! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवत:, तत् रक्ष परकलत्रेण ( ण ) आत्मन: कलत्रं जीवितञ्च ।

चन्द । अज्ज ! किं मे भअं दंसेसि ? सन्तं पि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि, किं उण असन्तं ( ५३ ) ।

चाण । चन्दनदास ! एष ते निश्चय: ?

चन्द । वाढं, एसो मे थिरो णिच्चओ ( ५४ ) ।

चाण । [ स्वगतम् । ] साधु चन्दनदास ! साधु ।—

सुलभेष्वर्थलाभेषु परसंवेदने जन: ।
क इदं दुष्करं कुर्य्यादिदानीं शिविना विना ॥ २३ ॥

---

(५२) नास्ति मे गेहे अमात्यराक्षसगृहजन: ।

(५३) आर्य्य ! किं मे भयं दर्शयसि ? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तम् ।

(५४) वाढं, एष मे स्थिरो निश्चय: ।

---

(ण) मर्षयिष्यति क्षमिष्यते । परकलत्रेणेति ।—परकलत्रेण परकलत्रार्पणेन आत्मन: कलत्रं जीवितञ्च रक्ष अन्यथा तदनर्पणे तव कलत्रजीवनयोरपगम: स्यादित्याशय: ।

सुलभेष्विति —को जन: अर्थलाभेषु अर्थानां लाभ: येभ्य: ते अर्थलाभा:

[प्रकाशम्।] चन्दनदास! एष ते निश्चयः?

चन्द। वाढं, एसो मे थिरो णिच्चओ (५५)। (त)

चाण। [सक्रोधम्।] दुरात्मन्! दुष्टवणिक्! अनुभूयतां तर्हि राजकोपः।

चन्द। [बाहू प्रसार्य।] सज्जोह्मि, अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स अणुरूअं [सरिसं] (५६)।

चाण। [सक्रोधम्।] शार्ङ्गरव! उच्यताम् अस्मद्वचनात् कालपाशिको दण्डपाशिकश्च, शीघ्रमयं दुष्टवणिक् निगृह्यताम्, अथवा तिष्ठतु, उच्यतां दुर्गपालो विजयपालश्च, गृहीतगृहसारमेनं (थ) सपुत्रकलत्रं संयम्य रक्ष तावत्, यावत् मया वृषलाय कथ्यते, स एव अस्य सर्वस्वप्राणहरणं दण्डम् आज्ञापयिष्यति।

---

(५५) वाढं, एष मे स्थिरो निश्चयः।

(५६) सज्जोऽस्मि, अनुतिष्ठतु र्य्यः आत्मनोऽधिकारस्य अनुरूपम् ["सरिसं" इति पाठे—सदृशम्]।

---

अर्थागमोपाया इत्यर्थः, तेषु सुलभेषु अपीति शेषः राक्षसकलत्रपरित्यागे राजानुग्रहलाभः तल्लाभे च विविधोन्नतिः सम्भाव्यत इति जानन्नपि तान् परित्यज्येति भावः। परसंवेदने परमपीड़ायाम् आत्मनः महत्यनिष्टे सम्भविष्यति अपीति भावः, शिविना राज्ञा विना इदानीम् अस्मिन् कलियुगे इदं परकलत्राच्छादनरूपं दुष्करम् असाध्यं राजदण्डावश्यम्भावादिति भावः, धर्मं कुर्य्यात्, न कोऽपीत्यर्थः। धनार्जनोपायार्थत्वेन तथाचरणं स्यादित्याशङ्का तेषां सुलभत्वं प्रदर्शितम्। शिविना कपोतरक्षणाय श्येनसन्तोषार्थमात्मनः हृदयमांसं दत्तमिति पौराणिकी वार्त्ताऽत्रानुसन्धेया। अनुष्टुप् वृत्तम् ॥ २३ ॥

(त) स्वजीवननाशेऽपि अमात्यकलत्रस्यासमर्पणरूपो निश्चयः निश्चीयमानोऽर्थः।

(थ) गृहीतगृहसारं गृहीतः गृहस्य सारः मूलधनादिरूपस्थिरांशः यस्य स तथोक्तस्तम्।

शिष्यः । यत् आज्ञापयति उपाध्याय इति । श्रेष्ठिन् ! इत इतः ।

चन्द । [ उत्थाय ] अज्ज ! अअमाअच्छामि । [स्वगतम् । ] दिट्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिस दोसेण ( ५७ ) (द) । [ परिक्रम्य शिष्येण सह निष्क्रान्तः । ]

चाण । [सहर्षम् ।] हन्त, लब्ध इदानीं राक्षसः । कुतः ?—

त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि ।
तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः ॥ २४ ॥

[ नेपथ्ये कलकलः । ]

चाण । शार्ङ्गरव !

[ प्रविश्य शिष्यः । ] उपाध्याय ! आज्ञापयतु ।

चाण । ज्ञायतां किमेतत् ।

[ निष्क्रम्य विभाव्य पुनः प्रविश्य सम्भ्रान्तः शिष्यः । ] उपाध्याय ! एष खलु शकटदासं वध्यमानं वध्यभूमेः आदाय समपक्रान्तः (ध) सिद्धार्थकः ।

---

( ५७ ) आर्य्य ! अयमागच्छामि । दिष्ट्या मित्रकार्य्येण मे विनाशो जनितः, न पुनः पुरुषदोषेण ।

---

(द) पुरुषदोषेण स्वार्थापराधेन इत्यर्थः ।

त्यजतीति ।—अयं चन्दनदासः तस्य राक्षसस्य आपदि पुत्रकलत्रादीनां अव-रुद्धे पतिष्यत्स्वरूपायां तद्रक्षणार्थेति भावः प्राणान् अप्रियवत् अनिष्टवत् यथा त्यजति तस्य राक्षसस्यापि प्राणाः अस्य चन्दनदासस्य आपदि राजदण्डेन समूलघात-रूपायां सत्यां तथैव नूनं निश्चितं न प्रिया भविष्यन्तीति शेषः । तस्य कृतोपकारित्वात् अभिमतचन्दनदासेन सह अभिन्नहृदयत्वाच्च नूनमुत्प्रेक्षे सम्भावयामीति भावः । अनुष्टुप् वृत्तम् ॥ २४ ॥

(ध) वध्यभूमेः इति अपादाने पञ्चमी । समपक्रान्तः पलायितः ।

चाण। [स्वगतम्।] साधु सिद्धार्थक! साधु, कृतः कार्य्यारम्भः (न) [प्रकाशम्।] प्रसह्य किमपक्रान्तः? [सक्रोधम्] वत्स! उच्यतां भागुरायणो यथा त्वरितमेनं सम्भावयति (प)।

शिष्यः। [पुनः तथा कृत्वा प्रविश्य सविषादम्।] उपाध्याय! हा धिक् कष्टम्, अपक्रान्तो भागुरायणः (फ)।

चाण। [स्वगतम्।] व्रजतु कार्य्यसिद्धये (ब)। [प्रकाशं सक्रोधमिव।] वत्स! कृतं विषादेन, उच्यताम् अस्मद्वचनात् भद्रभट-पुरुषदत्त-हिङ्गुरात-बलगुप्त-राजसेन-रोहिताक्ष-विजयवर्माणः, शीघ्रम् उपसृत्य गृह्यतां दुरात्मा भागुरायणः।

शिष्यः। यदाज्ञापयति उपाध्यायः। [इति निष्क्रम्य पुनः प्रविश्य सविषादम्।] उपाध्याय! हा धिक् कष्टं, सर्वमेव तन्त्रमाकुलीभूतं, (भ) तेऽपि खलु भद्रभटप्रभृतयः प्रथमम् अप्रभातायामेव रजन्याम् अपक्रान्ताः।

चाण। [स्वगतम्।] सर्वेषामेव शिवाः पन्थानः सन्तु। [प्रकाशम्।] वत्स! अलं विषादेन। पश्य,—



(न) कार्य्यारम्भः स्वमन्त्रितस्य शकटदासस्य वध्यभूमेरादायापसरणरूपस्य कार्य्यस्य आरम्भः साधु यथा स्यात् तथा कृतः। तथाकरणे च तस्य राक्षससन्निधे विश्वासभाजनता स्यात् इति तेन चाग्रे वर्णयिष्यमाणं महत् कार्य्यं भविष्यतीति तस्य साधुत्वम्।

(प) सम्भावयति धरति।

(फ) भागुरायणापक्रमणं मलयकेतोराश्रयस्थित्या वक्ष्यमाणकार्य्यनिष्पादनार्थं चाणक्येन स्वयमुपदिष्टम्।

(ब) कार्य्यस्य अग्रे वर्णयिष्यमाणस्य कृत्यस्य स्वोपदिष्टस्य सिद्धये निष्पादनाय।

(भ) तन्त्रं प्रकृतिमण्डलम्। आकुलीभूतं व्यस्तम्

ये याताः किमपि प्रधार्य्य हृदये, पूर्वं गता एव ते
ये तिष्ठन्ति, भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः ।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्य्यमहिमा बुद्धिस्तु मा गान्मम ॥ २५ ॥

[ उत्थाय प्रत्यक्षवदाकाशे लक्ष्यं बद्धा । ] एष खलु दुरात्मनो भद्रभटप्रभृतीन् आहरामि । [ आत्मगतम् । ] दुरात्मन् राक्षस ! क्व इदानीं यास्यसि ? (म) एषोऽहमचिरात् भवन्तं,—

स्वच्छन्दमेकचरमुज्ज्वलदानशक्तिम्
उत्सेकिना बलमदेन विगाह्यमानम् ।

---

ये याता इति ।—ये भागुरायणादयः किमपि हृदये प्रधार्य्य मनसि कृत्वा पूर्वं याताः ते गता एव तदनुशोचनं वृथैव, गतस्य शोचनं नास्तीति न्यायादिति भावः । ये जना अत्र तिष्ठन्ति तेऽपि गमने प्रकामोद्यमाः भवन्तु गच्छन्तु इत्यर्थः, मया स्वबुद्ध्या एव सर्वकार्य्याणां सम्पाद्यत्वात् तैरपि न मे प्रयोजनमिति भावः । अर्थसाधनविधौ कार्य्य-सम्पादनरूपे विधाने सेनाशतेभ्यः बहुसेनाभ्यः अधिका अधिकसमर्था नन्दोन्मूलनदृष्ट-वीर्य्यमहिमा नन्दानाम् उन्मूलनेन दृष्टः वीर्य्यस्य शक्तेः महिमा माहात्म्यं यस्यास्तादृशी एका अद्वितीया मम बुद्धिस्तु केवलं मा गात् न गच्छतु बुद्धेः सर्व्वकार्य्यक्षमतायोतनार्थं नन्दोन्मूलनेत्यादि विशेषणम् । बुद्धिबलेन एवाहं सर्व्वं सम्पादयिष्यामि इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

(म) स्वप्रेरितपुरुषसङ्घसमाक्रान्तत्वात् राक्षसस्य सुकरमायत्तीकरणं प्रकाशयन्नाह—क्व इदानीमित्यादि । इदानीमस्मत्प्रेरितगुप्तचरैरेवं संवेष्टितः कस्मिन् स्वकृत्यं विन्यस्य यास्यसि नो केचिदपि तवार्थसाधकाः सर्वे ममार्थसाधका एव ; यद्वा क्व कस्मिन् देशे यास्यसि ? अस्मत्प्रणिधिभिरनुस्रियमाणः यत्र कुत्रापि पलायिष्यसे तत्र तत्रैव धृतो भवि-ष्यसीति ? तव पलायनमप्यसुकरमिति भावः ।

स्वच्छन्दमिति ।—एकचरम् एकः निःसहायः यूथहीनः चरतीति तथोक्तम्, उज्ज्वलदानशक्तिम् उज्ज्वला उत्कृष्टा दानशक्तिर्वितरणशक्तिः मदजलक्षरणसामर्थ्यञ्च यस्य तथाविधम्, उत्सेकिना उद्रिक्तेन बलमदेन सैन्यगर्वेण दैहिकसामर्थ्यगर्वेण च

बुद्ध्या निगृह्य, वृषलस्य कृते, क्रियायाम्
आरण्यकं गजमिव प्रगुणीकरोमि ॥ २६ ॥

[ इति निष्क्रान्ताः सर्वे (य) ।

इति मुद्राराक्षसे (र) प्रथमोऽङ्कः (ल) ।

---

## द्वितीयोऽङ्कः ।

[ ततः प्रविशति आहितुण्डिकः (क) । ]

आहि ।

जाणन्ति तन्तजुत्तिं जहट्ठिअं मण्डलं अहिलिहन्ति ।
जे मन्तरक्खणपरा ते सप्पणराहिवे उवचरन्ति (१) ॥१॥

(१) जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति ॥

---

स्वच्छन्दं यथेच्छं विगाहमानं विचरन्तम् आरण्यकं वन्यं दुर्दमत्वमाप्यात् गजमिव भवन्तमिति गद्यस्थपदमवाकृष्यान्वयः कार्य्यः, वृषलस्य चन्द्रगुप्तस्य कृते निमित्तं प्रयोजन-साधनार्थमित्यर्थः बुद्ध्या निगृह्य वशीकृत्य क्रियायां तस्यैव साचिव्यग्रहणरूपायां वाहनादिरूपायाञ्च प्रगुणीकरोमि प्रकृष्टगुणवन्तम् अनुरागिणमित्यर्थः सुदृढ़रज्ज्वु बद्धञ्च करोमीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ २६ ॥

(य) "पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः" इत्युक्तेः प्रविष्टपात्राणामङ्कशेषे निष्क्रमणस्यावश्यकत्वात् निष्क्रान्ताः सर्व्वे इत्युक्तम् ।

(र) मुद्रां राक्षसाङ्गुरीयकस्थमुद्रां राक्षसं च अधिकृत्य कृतो ग्रन्थः । तदधिकृत्य कृते ग्रन्थे इत्यणि द्वन्द्वात् परस्य तस्य लुक् । यद्वा मुद्रया राक्षसाङ्गुरीयस्थमुद्रया जितो राक्षसो यत्र, मध्यपदलोपी समासः ।

(ल) "प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः" इत्याद्युक्तलक्षणः अङ्कः ।

---

(क) आहितुण्डिकः अहितुण्डेन सर्पमुखेन जीवतीति ठक् सर्पक्रीड़नोपजीवी-त्यर्थः ( सापुड़े इति भाषा ) ।

जानन्तीति ।—ये जनाः तन्त्रयुक्तिं तन्त्रस्य शास्त्रविशेषस्य युक्तिं सिद्धान्तोक्तमुपायं सर्पो-

[आकाशे ।] अज्ज ! किं भणासि को तुमं त्ति ? अज्ज ! अहं क्खु आहितुण्डिओ जिण्णविसो णाम । [पुनराकाशे ।] किं भणासि अहंपि अहिणा खेलिदुं इच्छामि त्ति ? अध कदरं उण अज्जो वित्तिं उवजीवदि ? [पुनराकाशे ।] किं भणासि राअउलसेवओ त्ति ? णं खेलदि ज्जेव अज्जो अहिणा (ख) । किं भणासि कधं त्ति ? अमन्तोसहिकुसलो वालग्गाही,

---

(२) आर्य ! किं भणसि कस्त्वमिति ? आर्य ! अहं खलु आहितुण्डिको जीर्णविषो नाम । किं भणसि अहमपि अहिना खेलितुमिच्छामीति ? अथ कतरां पुनरार्यो वृत्तिम् उपजीवति ? किं भणसि राजकुलसेवक इति ? ननु खेलति एव आर्योऽहिना । किं भणसि कथमिति ? अमन्त्रौषधिकुशलो व्यालग्राही,

---

अथ-योगमन्त्र यथास्थितं यथार्थं जानन्ति, मण्डलं द्वादशविधराजमण्डलम्—अयमरिः, अयं मित्रम्, अयमरिमित्रम्, अयमुदासीनः, अयं विजिगीषुः, इत्यादिरूपेण अभिलिखन्ति अभिलक्ष्य विशेषतो ज्ञात्वा पक्षारूढान् कुर्वन्ति, पक्षे मण्डलं सर्पकुण्डलनस्थानमभिलक्ष्य भूमिं विदारयन्तीत्यर्थः । ये च मन्त्ररक्षणपराः मन्त्रणाकार्य्यस्य रक्षणे गोपने पराः गोपनशीलाः इत्यर्थः, पक्षे गारुडादिमन्त्रैः रक्षणे आत्मरक्षणे परा आसक्ता गारुडादि-मन्त्रधारका इत्यर्थः, ते जनाः सर्पनराधिपे सर्प एव नराधिपः यत्किञ्चित्स्खलनेऽपि तीक्ष्णप्रतापेन प्राणहरत्वात्, तस्मिन् उपचरन्ति व्यवहरन्ति तमुपजीव्य विचरन्तीत्यर्थः, नान्ये । एतेन राज्यतन्त्रावेक्षकेण सर्पोपजीविना च अतिसावधानतया वर्त्तितव्यम्, अन्यथा आत्मविनाशसम्भव इति भावः । अस्मिन् प्रकरणे चात्र राक्षसस्य प्रमत्ततया स्वाश्रितवर्गापरीक्षणेन स्वपदच्युतिरूपानिष्टप्राप्तिः भविष्यतीति तत्सूचनाय नराधिपे सर्पत्वारोप इति द्रष्टव्यम् ॥ १ ॥

(ख) एवमाकाशस्थादृश्यपुरुषवाचं स्वयमेवोक्त्वा प्रत्युत्तरयति—अज्जेति । एवमग्रेऽपि । किं भणसि राजकुलसेवक इति ? त्वम् इति शेषः । ननु खेलति एव आर्योऽहिना । राजकुलसेवकस्य सर्वदा शङ्कितेन स्थातव्यं किञ्चित्स्खलने प्राणनाशसम्भवादिति भावः ।

अगिहीदङ्कुसो मत्तगअवरारोही, लद्धाहिआरो जिदकासी राअसेवओ त्ति एदे तिण्णि अवस्सं विणासमणुभवन्ति (२)(ग)।

कधं, दिट्ठमत्तो अदिक्कन्तो एसो ? [ पुनराकाशे। ] अज्ज ! तुमं उण किं भणासि किं एदेसु पेडासमुग्गकेसु त्ति ? अज्ज ! अप्पजीविआसम्पादआ सप्पा। [ पुनराकाशे। ] किं भणासि पेक्खिदुमिच्छामि त्ति ? प्पसीददु प्पसीददु अज्जो। अट्ठानं क्खु एदं, ता जइ दे कोदूहलं, ता एहि एदस्सिं आवासे दंसेमि। [ पुनराकाशे। ] किं भणासि एदं क्खु भट्टिणो अमच्चरक्खसस्स गेहं णत्थि इध अह्मारिसाणं प्पवेसो त्ति ? तेण हि गच्छदु अज्जो। जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसो त्ति। कधं एसोवि अदिक्कन्तो (३)। [ दिशोऽवलोक्य संस्कृतमाश्रित्य स्वगतम्। ] अहो ! आश्चर्य्यम्. चाणक्यमति-

---

अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारो जितकाशी राजसेवक इत्येते त्रयोऽवश्यं विनाशमनुभवन्ति।

(३) कथं, दृष्टमात्रोऽतिक्रान्त एषः। आर्य्य ! त्वं पुनः किं भणसि किमेतेषु पेटकसमुद्गकेषु इति ? आर्य्य ! आत्मजीविकासम्पादकाः सर्पाः। किं भणसि प्रेक्षितुमिच्छामीति ? प्रसीदतु प्रसीदतु आर्य्यः। अस्थानं खलु एतत्, तद् यदि ते कौतूहलं तदेहि एतस्मिन्नावासे दर्शयामि। किं भणसि इदं खलु भर्तुरमात्यराक्षसस्य गृहं, नास्त्यत्र अस्मादृशानां प्रवेशः इति ? तेन हि गच्छतु आर्य्यः। जीविकायाः प्रसादेन अस्ति अत्र मम प्रवेश इति। कथमेषोऽपि अतिक्रान्तः।

---

(ग) अमन्त्रौषधिकुशलः मन्त्रे गारुडादिके, ओषधौ च, न कुशलः निपुणः, अज्ञ इत्यर्थः, व्यालग्राही सर्पजीवी, अगृहीतः अङ्कुशः येन तादृशः आसनदण्ड-रहित इत्यर्थः, मत्तगजेन्द्रारोही, लब्धः अधिकारः कार्य्यप्रभुत्वं येन तादृशः, अत एव जितकाशी गर्वितः अनात्मज्ञ इत्यर्थः, ( जितकाशी जिताहवो जयी वा इति केचित्। ) राजसेवकः एते त्रयः अवश्यं निश्चितं विनाशम् अनुभवन्ति प्राप्नुवन्तीत्यर्थः, एतेषां सर्वथा स्खलनसम्भवादिति भावः।

परिगृहीतं (घ)चन्द्रगुप्तम् अवलोक्य, विफलमिव राक्षसप्रयत्नम् अवगच्छामि । राक्षसमतिपरिगृहीतस्य मलयकेतुम् अवलोक्य, चलितमिवाधिराज्यात् चन्द्रगुप्तमवगच्छामि । तथाहि (ङ)—

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीम् ।
उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि ॥ २ ॥

तदेवमनयोः सुनयशालिनोः सचिवयोर्विरोधे संशयितेव(च) राज्य [ नन्दकुल ] लक्ष्मीर्लक्ष्यते । कुतः ?—

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययोः
महावने वनगजयोरिवान्तरे ।
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिह खिद्यते श्रिया ॥ ३ ॥

तद्यावदहममात्यराक्षसं पश्यामि ।

---

(घ) चाणक्यस्य मतिः बुद्धिः प्रवर्त्तनारूपा परिगृहीता येन, निष्ठान्तस्य परनिपातः ।

(ङ) उभयोर्बुद्धिकौशलं दर्शयितुमाह—तथाहीति ।

कौटिल्येति ।—मौर्य्यकुलस्य चन्द्रगुप्तवंशस्य लक्ष्मीं राज्यश्रियं कौटिल्यस्य चाणक्यस्य धीः बुद्धिः एव (स्थिरतापादनहेतुत्वात्) रज्जुः तया निबद्धा मूर्त्तिर्यस्याः ताहशीम्, अत एव स्थिरां निश्चलाम् इव मन्ये, अपि तथा राक्षसेन उपायहस्तैः उपायाः सामादयः ("सामदानभेददण्डमित्युपायचतुष्टयम्" इत्यमरः) एव हस्ताः तैः विकृष्यमाणाम् आकृष्यमाणामिव लक्षयामि सम्भावयामि । अत्रोत्प्रेचालङ्कारः, रज्जुबद्धमपि हस्तेनाकृष्यमाणं लोकसिद्धमित्यतस्तथोत्प्रेक्षा । "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति लक्षणात् । अत्र इन्द्रवज्रोपेन्द्रवज्रयोः सङ्कररूपम् उपजातिः वृत्तम् ॥२॥

(च) सुनयशालिनोः सुनीतिश्रयोः । सचिवयोः चाणक्य-राक्षसयोः । संशयितेव कुत्र तिष्ठामीति सन्देहाकुलेव इत्यर्थः ।

विरुद्धयोरिति ।— महावने आन्यवाहवे वनगजयोरिव भृशम् अतिमात्रं विरुद्धयोः अन्योन्यजयार्थं विरोधमाचरतोः मन्त्रिमुख्ययोः अमात्यवरयोः चाणक्य-राक्षसयोः अन्तरे

[ ततः प्रविशति आसनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः । ]

राक्षसः । [ ऊर्द्ध्वमवलोक्य सवाष्पम् । ] कष्टं भोः, कष्टम् ।

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम् ।
चिन्तावेशसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्त्तते ॥ ४ ॥

---



मध्ये स्थितया इति शेषः । इह अस्मिन् उपस्थितविषये परस्परजयरूपे व्यापारे अनिश्चयात् कस्य जयो भविष्यतीति निश्चयाभावात्, भीतया गजवध्वा करिण्या इव श्रिया राजलक्ष्म्या गतागतैः नन्दकुलात् मौर्य्ये गतिः पुनः मौर्य्यात् नन्दकुले आगतिरित्येवं गमनागमनैः भृशम् अतिमात्रं प्रयासबाहुल्यात् खिद्यत इव । अत्रापि उत्प्रेक्षालङ्कारः । रुचिरा वृत्तम्, "जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात् ॥ ३ ॥

वृष्णीनामिति ।—नीतिः दण्डनीतिः विक्रमः शौर्य्यं गुणाः सन्धिविग्रहादयः, तेषां व्यापारेण यथास्थानं प्रयोगेण शान्ताः द्विषः शत्रवः येषां तादृशानां वृष्णीनां यदूनामिव नन्दानां पुत्राष्टकसहितयोगानन्दस्य विपुले महति कुले अकरुणया निष्ठुरया नियत्या दैवेन क्षयं नीते, चिन्तावेशसमाकुलेन कथमेतदापतितमिति चिन्ताऽऽसक्तिव्याकुलेन मनसा रात्रिन्दिवं रात्रिश्च दिवा च अचतुरेत्यादिना निपातः ; जाग्रतः चिन्ताबाहुल्यात् अनिद्रामनुभवतः इत्यर्थः, मम सैव चिन्तेवेयं कल्पितविषयावलम्बनेन तद्विषयसङ्कल्प-विकल्पयोर्जायमाना भित्तिं चित्रलेखनाधारविशेषं विना चित्रकर्मरचना तत्स्वरूपा इत्यर्थः वर्त्तते चिन्तया विविधविषयिणी कल्पना आविर्भवति परं प्रकृतस्थानं न प्राप्नोति इति भावः । अत्र नीतिविक्रमगुणप्रयोगशमितशत्रूणां वृष्णीनामिव नन्दानामित्यं-शेनोपमानुप्राणितः रात्रिन्दिवं चिन्तान्वितस्य भावनाकल्पितविषयसङ्कल्पविकल्पमयी चित्रकर्मरचना चित्रलेखनकुड्याद्याधारं विनापि वर्त्तते इति विशेषालङ्कारः, अनाधारा-ऽऽधेयस्थापनात्मकः । तदुक्तं दर्पणे—"यदाधेयमनाधारमेकञ्चानेकगोचरम् । किञ्चित् प्रकुर्व्वतः कार्य्यमशक्यस्येतरस्य वा । कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधः स्मृतः ॥" इति । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

अथवा,—

नेदं विस्मृतभक्तिना न विषयव्यापारमूढात्मना
प्राणप्रच्युतिभीरुणा न च मया, नात्मप्रतिष्ठार्थिना ।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति ॥ ५ ॥

[ आकाशमवलोकयन् सास्रम् । ] भगवति कमलालये ! भृशम् अगुणज्ञासि । कुतः ?—

आनन्दहेतुमपि देवमपास्य नन्दं
रक्तासि किं, कथय, वैरिणि मौर्य्यपुत्रे ।

---

नेदमिति ।—परदास्यं पराधीनताम् एत्य प्राप्य आश्रित्य इत्यर्थः मया नीतौ यत् मनः अत्यर्थम् अतीव दीयते इदं विस्मृतभक्तिना न स्वाम्यनुरागं स्मरतैव दीयते इत्यर्थः । तत्स्मरणे विस्मरणे नीतौ मनोदानासम्भवादेवमुक्तम् । अनुरक्तस्याप्यकार्य्यज्ञस्य कार्य्यसिद्धेरभावः तदभावं स्वात्मनि दर्शयन्नाह—न विषयेति । विषयव्यापारमूढात्मना न, विषयव्यापारे सामादिप्रयोगे मूढः अनभिज्ञः आत्मा अन्तःकरणं यस्य तादृशेन न, सामादिप्रयोगं यथायथं जानता एवेत्यर्थः । अतथाकरणे प्राणविनाशशङ्कापि नास्तीति दर्शयन्नाह—प्राणेति । प्राणप्रच्युतिः प्राणनाशः ततो भीरुणा शङ्कितेन न, अपि तु निर्भीकेणैव मनो दीयते इत्यर्थः । तत् किम् आत्मप्रतिष्ठा आत्मगौरवं, तस्य अर्थिना अभिलाषिणा एव यशोलाभार्थं मनो दीयते ? नेत्याह, नात्मप्रतिष्ठाशया, आत्मयशोवाञ्छया न । किं तर्हीत्यत आह—देव इति । देवः नन्दः स्वर्गगतोऽपि शात्रववधेन शत्रुनाशेन तदीयरिपूणां मया नाशनेन इति यावत्, आराधितः तत्प्रार्थितस्य मया सम्पादनात् आप्यायितः स्यात्, इति अस्मादेव कारणात् मनो दीयते इत्यर्थः । अत्र स्वीयपराधीनतायामपि परलोकप्राप्तप्रभोराराधनार्थैव शात्रववधरूपाद्वस्तुनः हेतोः नैतिकसन्दर्भे, अत्यन्तमनोनियोगप्रकाशनम्, अप्रश्नपूर्वकतादृशविस्मृतभक्तित्वात्मप्रतिष्ठालाभप्रमुखशब्दहेतुचतुष्टयनिराकरणेन परिसङ्ख्यालङ्कारः । तदुक्तं दर्पणे—"प्रश्नादप्रश्नतो वाऽपि कथितादवस्तुनो भवेत् । तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥" इति । शार्दूलविक्रीडितं वृत्तमत्रापि ॥ ५ ॥

(६) आनन्दहेतुमिति ।—हे चपले ! चञ्चलस्वभावे ! लक्ष्मि ! आनन्दहेतुम् अपि देवं नन्दम् अपास्य विहाय किं कथं वैरिणि तद्विपक्षे मौर्य्यपुत्रे रक्तासि अनुरागिणी

दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न, चपले ! प्रलयं गतासि ? ॥ ६ ॥

अपिच, अनभिजाते ! (क)

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः ?
पतिं, पापे ! मौर्य्यं यदसि कुलहीनं कृतवती ।
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला,
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ ७ ॥

अपिच, अविनीते ! तदहमाश्रयोन्मूलनेन एव त्वामकामां करोमि । [विचिन्त्य ।] मया तावत् सुहृत्तमस्य चन्दनदासस्य

---

असि ? गन्धगजस्य दानाम्बुगन्धप्रधानहस्तिनः नाशे सति "कदभिहितो भावो द्रव्यवत् प्रकाशते" इत्युक्तेः तादृशे हस्तिनि नष्टे इत्यर्थः, तदीया दानाम्बुराजिः मदजलधारा इव तत्रैव नष्टे तेन सह इत्यर्थः, किं कथं प्रलयं विलयं न गताऽसि कथय, तादृशं गुणशालिनं पतिं विहाय अगुणज्ञं तवाश्रयणमनुचितमिति तथा च असत्पुरुषाश्रयणापेक्षया मरणमेव वरमिति भावः । चपले इति सम्बोधनेन कार्य्यविमूढता श्रियः सूचिता । वसन्ततिलकं वृत्तम् ॥ ६ ॥

(क) अनभिजाते ! असद्वंशजे ! अकुलीने । दुष्कुलजातत्वेनास्याः असदाचरणे प्रवृत्तिरिति भावः ।

पृथिव्यामिति ।—प्रथितकुलजाः विख्यातकुलोद्भवाः भूमिपतयः राजानः पृथिव्यां किं दग्धाः ? भस्मीकृताः ? दैवेनेति शेषः, नैवेत्यर्थः । हे पापे ! पापाचरणे ! लक्ष्मि ! यत् यस्मात् कुलहीनम् अकुलीनं मौर्य्यं पतिं कृतवती महाकुलीनासद्भावे दुष्कुलाश्रयणं सम्भवति परं सत्सु महाकुलीनेषु तदाश्रयणमतीव गर्हितमिति भावः । अथवा पुरन्ध्रीणां स्त्रीणां काशप्रभवकुसुमप्रान्तचपला काशः प्रभवो यस्य तादृशं यत् कुसुमं काशपुष्पमित्यर्थः तस्य प्रान्तम् अग्रं तद्वत् चपला चञ्चला क्षणस्थायिनीत्यर्थः । आकाशकुसुमप्रान्तचपलेत्यपपाठः तस्य मिथ्यात्वात् उपमानासम्भवात् । प्रज्ञा बुद्धिः प्रकृत्या स्वभावेन पुरुषस्य गुणविज्ञाने विशेषतो विवेचने विमुखीभवतीति शेषः । सहसा गुणविज्ञानस्य असम्भवात् धैर्य्यमत्रापेक्षते न तु चापल्यमिति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः । शिखरिणी वृत्तम् ॥ ७ ॥

गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम्। किं कारणमिति? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति, तत्रस्थानाम् अस्माभिः सह एककार्याणां देवपादोपजीविनां न उद्यमः शिथिलीभविष्यतीति। चन्द्रगुप्तशरीरम् अभिद्रोग्धुम् अस्मत्प्रयुक्तानां तीक्ष्णरसदायिनाम् उपसंग्रहार्थं, परकृत्योपजापार्थञ्च, महता कोषसञ्चयेन स्थापितः शकटदासः। प्रतिक्षणम् अरातिवृत्तान्तोपलब्धये, तत्संहतिभेदाय च व्यापारिताः (ज) सुहृदो जीवसिद्धिप्रभृतयः। तत् किमत्र बहुना।

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपुष्य नष्टः।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यमानम् ॥८॥

---

(ज) अकामा विफलमनोरथाम्। परकृत्योपजापार्थं शत्रुकार्यभङ्गार्थम् अथवा परेषां शत्रूणां कृत्यमेव कृत्यं कार्यं येषां तादृशानां शत्रुकार्यकारिणाम् उपजापार्थं भेदार्थं प्रचुरधनादिदानेन ते पुरुषा यथा शत्रुभ्यो भिद्येरन् तथाचरणार्थं, मन्त्रिभङ्गकरणार्थमित्यर्थः। कोषसञ्चयेन धनराशिना। तत्संहतिभेदाय तेषाम् अरातीनां संहतिः सम्मेलनं तस्या भेदः भङ्गः तस्मै, सम्मिलने शत्रूणां दुर्जयता, भेदे सुजयतेति भावः। व्यापारिताः नियुक्ताः।

इष्टात्मज इति।—इष्टः प्रियः आत्मजः यस्य सः देवः नन्दः सान्वयः सवंश एव पुत्राष्टकसहित एव इत्यर्थः, शार्दूलपोतं व्याघ्रशावकमिव यं चन्द्रगुप्तं परिपुष्य दासीगर्भजमपि आत्मजत्वात् परिपाल्य इत्यर्थः नष्टः। अहं बुद्धिविशिखेन प्रज्ञारूपशरेण तस्य चन्द्रगुप्तस्यैव मर्म सन्धिस्थानं यस्मिन्नाहते मृत्युर्भवति तत् स्थानं मर्म भिनद्मि द्विधा करोमि। यदि दैवं चन्द्रगुप्तशुभादृष्टम् अदृश्यमानम् अप्रकाशमानं सत् तस्य न वर्मीभवेत् कवचरूपं स्यात् रक्षकं न भवेदित्यर्थः तथाच तस्य भाग्यवशमेव मद्बुद्धिशरभेदनाद् रक्षणोपायो नान्य इति भावः। वसन्ततिलकं वृत्तम् ॥ ८ ॥

[ ततः प्रविशति कञ्चुकी । ]

कञ्चु ।

कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य्य इव, क्रमेण, नगरे नीतः प्रतिष्ठां मयि ।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते, जेतुं न शक्नोति च ॥८॥

[दृष्ट्वा] अयममात्यराक्षसः । [ परिक्रम्य उपसृत्य च । ] अमात्य ! स्वस्ति भवते ।

राक्ष । आर्य्य ! जाजले ! अभिवादये । प्रियंवदक ! आसनम् अत्रभवत उपनय ।

प्रियं । एदं आसणं उपविसदु अज्जो (४) ।

कञ्चु ! [नाट्येन उपविश्य] । अमात्य ! कुमारो मलयकेतुरमात्यं विज्ञापयति. "चिरात् प्रभृति आर्य्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम् । यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं (ञ) तथापि मद्विज्ञापनां मानयितुम् अर्हति आर्य्यः ।"[इत्याभरणानि दर्शयित्वा । ] अमात्य ! इमानि

---

( ४ ) इदम् आसनम् उपविशतु आर्य्यः ।

---

काममिति ।—चाणक्यनीत्या यथा चाणक्यनयेनेव जरया वार्द्धक्येन नन्दमिव कामं विषयाभिलाषं प्रमथ्य अभिभूय नगरे मौर्य्य इव मयि क्रमेण धर्म्मः प्रतिष्ठां स्थितिं नीतः । तथाच जरया विषयरागोऽभिभूयते धर्मे च मतिराधीयते इति भावः । राज्ञामिव सेवया विषयाणामिति शेषः लब्धान्तरः प्राप्तावकाशः लोभः सम्प्रति इदानीम् उपचीयमानमपि वर्द्धमानमपि तं धर्मं राक्षसवत् चन्द्रगुप्तमिति शेषः जयाय यतते चेष्टते, जेतुम् अभिभवितुं न शक्नोति च, जरायां धर्म्मबाहुल्यात् प्रबलमपि लोभः विषयवैराग्यात् न धर्मं जेतुं शक्नोति धर्महानिकरणे न समर्थो भवतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८ ॥

(ञ) उचितसंस्कारत्यागे हेतुं वर्णयन्नाह—स्वामिगुणा इति । स्वामिनो नन्दस्य ये

आभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुम् अर्हति आर्य्यः ।

राक्ष । आर्य्य ! जाजले ! विज्ञाप्यतां मद्वचनात् कुमारः, विस्मृता मया स्वामिगुणाः तव गुणपक्षपातिना । किन्तु,—

न तावन्निर्वीर्य्यैः परपरिभवाक्रान्तिकृपणैः
वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम् ।
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे, हेमाङ्कं, नृवर ! तव सिंहासनमिदम् ॥१०॥

कञ्चु । अमात्ये त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः (ञ) ।

राक्ष । आर्य्य ! कुमार इव अनतिक्रमणीयवचनो भवानपि तदनुष्ठीयते कुमारस्याज्ञा ।

कञ्चु । [ नाट्येन भूषणानि परिधाप्य । ] स्वस्ति भवते, साधयाम्यहम् (ट) ।

राक्ष । आर्य्य ! अभिवादये ।

---

दयादाक्षिण्यादयो गुणास्ते सहसा विस्मर्तुं न शक्यन्ते, तत् स्मरणे च तदीयदुःखमात्मनि आरोप्य देहसंस्कारो नैव क्रियते दुःखितस्य भूषायां प्रयत्नाभावादिति भावः ।

न तावदिति ।—हे नृवर ! नरश्रेष्ठ ! यावत् निःशेषं यथा तथा क्षयितं नाशितं रिपुचक्रं शत्रुसमूहो यस्य तादृशस्य तव हेमाङ्कं स्वर्णालङ्कृतमित्यर्थः इदं सिंहासनं सुगाङ्गे तदाख्ये पाटलिपुत्रनगरप्रासादे, सुष्ठु गाङ्गं गङ्गाजलं यत्र तादृशे नगरे पाटलिपुत्रे इति वा, न निहितं स्थापितं भवेदिति शेषः तावत् परपरिभवाक्रान्तिकृपणैः परेषां परिभवः परपरिभवः तस्य आक्रान्त्या आक्रमणेन कृपणैः दीनैः एभिः अङ्गैः प्रतनुमपि स्वल्पामपि संस्काररचनां देहमार्जनालङ्कारधारणादिरूपं न वहामि । शिखरिणी वृत्तम् ॥ १० ॥

(ञ) प्रतिमान्यतां प्रतिपाल्यताम् । प्रणयः आभरणधारणरूपः प्रार्थना ।

(ट) साधयाम्यहं, नाटके गच्छामीत्यत्र साधयामि इति प्रयुज्यते, "प्रायेणाण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति दर्पणोक्तेः । अहं कार्य्यसाधनार्थं गच्छामि इत्यर्थः ।

कञ्चु। स्वनियोगं साधयाम्यहमिति। (ठ) [ निष्क्रान्तः। ]

राक्ष। प्रियंवदक! ज्ञायतां कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति।

प्रियं। जं अज्जो आणवेदि त्ति। [निष्क्रम्य आहितुण्डिकं दृष्ट्वा। ] णं अज्ज! को तुमं (५)?

आहि। भद्द! अहं क्खु आहितुण्डिओ जिण्णविसो णाम, इच्छामि अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं (६)।

प्रियं। चिट्ठ, जाव अमच्चस्स णिवेदेमि। [ राक्षसमुपसृत्य। ] अज्ज! एसो क्खु सप्पोपजीवी इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं (७)।

राक्ष। [ वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम्। ] कथं प्रथममेव सर्पदर्शनम्। [ प्रकाशम्। ] प्रियंवदक! न नः कुतूहलमस्ति सर्पदर्शने, तत् परितोष्य विसर्जयैनम्।

प्रियं। जं अज्जो आणवेदि। [ निष्क्रम्य आहितुण्डिकमुपसृत्य। ] भद्द! एसो क्खु दे अमच्चो अदंसणेण फलं देदि [ पसादं करेदि ] ण उण दंसणेण (८)।

---

(५) यदार्य्य आज्ञापयतीति। ननु आर्य! कस्त्वम्?

(६) भद्र! अहं खल्वाहितुण्डिको जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुम्।

(७) तिष्ठ, यावदमात्यस्य निवेदयामि। आर्य्य! एष खलु सर्पोपजीवी इच्छति सर्पैः अमात्यस्य पुरतः खेलितुम्।

(८) यदार्य्य आज्ञापयति। भद्र! एष खलु ते अमात्योऽदर्शनेन फलं ददाति [पाठान्तरे—प्रसादं करोति] न पुनर्दर्शनेन।

---

(ठ) नियुज्यते इति नियोगः कर्त्तव्यकर्म्म तं राज्ञा यथाहं नियुक्तस्तत्कर्म्म साधयामि निष्पादयामि।

आहि। भद्द! विसवेहि मम वअणेण अमच्चं, ण केवलं अहं सप्पोवजीवी, पाउअकवी (ङ) क्खु अहं. ता जइ मम दंसणेण अमच्चो प्पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं प्पसीददु त्ति (९)। [पत्रमर्पयति।]

प्रियं। [पत्रं गृहीत्वा राक्षसमुपसृत्य।] अमच्च! एसो क्खु आहितुण्डिओ विसवेदि, ण केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं, ता जइ मे अमच्चो दंसणेण प्पसादं ण करेदि, ता एदं पि दाव पत्तअं वाचेदुं प्पसीददु त्ति (१०)।

राक्ष। [पत्रं गृहीत्वा वाचयति।]

पाउण णिरवसेसं, कुसुमरसं अत्तणो कुसलदाए।
जं उग्गिरदि भमरो तं, अस्साणं कुणइ कज्जं (११) ॥११॥

राक्ष। [आत्मगतम्।] अये! कुसुमपुरवृत्तान्तज्ञोऽहं

(९) भद्र! विज्ञापय मम वचनेनामात्यं, न केवलमहं सर्पोपजीवी; प्राकृतकविः खल्वहं; तस्मात् यदि मे दर्शनेन अमात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु इति।

(१०) अमात्य! एष खलु आहितुण्डिको विज्ञापयति; न केवलमहं सर्पोपजीवी, प्राकृतकविः खलु अहं, तस्माद् यदि मे अमात्यो दर्शनेन प्रसादं न करोति, तदा एतदपि तावत् पत्रकं वाचयितुं प्रसीदतु इति।

(११) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया।
यदुद्गिरति भ्रमरस्तदन्येषां करोति कार्य्यम् ॥

(ङ) प्राकृतकविः सुपण्डितः प्रकृतिपरिज्ञाने यत्त्वया नियुक्तः सोऽहमिति च ध्वनिः।

पीत्वेति।—आत्मनः कुशलतया नैपुण्येन निरवशेषं समग्रं कुसुमरसं पीत्वा भ्रमरः यद् उद्गिरति तत् उद्गीर्य्यमाणं मधु अन्येषां कार्य्यं देवपैत्रादिकं करोति निष्पादयति; अनेन आत्मनोऽपि सारग्राहितासाधर्म्येण भ्रमररूपेण मया कुसुमपुरवृत्तान्तः परिज्ञातः, तदुद्गिरणेन नियोक्तृणामभीष्टार्थतया कार्य्यसिद्धिर्भविष्यतीति ध्वन्यते ॥ ११ ॥

भवत्प्रणिधिश्चेति गाथार्थः । आः कार्य्यव्यग्रत्वात् मनसः प्रभूतत्वाच्च प्रणिधीनां, विस्मृतम्, इदानीं स्मृतिरुपलब्धा । व्यक्तम् आहितुण्डिकच्छद्मना कुसुमपुरात् आगतेन विराधगुप्तेन अनेन भवितव्यम् । [ प्रकाशम् । ] प्रियंवदक ! प्रवेशय एनं, सुकविः एषः, श्रोतव्यम् अस्मात् सुभाषितम् ।

प्रियं । जं अज्जो आणवेदि त्ति । [आहितुण्डिकमुपसृत्य । ] उपसप्पदु अज्जो ( १२ ) ।

आहि । [नाट्येन उपसृत्य अवलोक्य च स्वगतम् । ] अये ! अयममात्यराक्षसः तिष्ठति । [ संस्कृतमाश्रित्य । ] स एषः,—

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना,
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः ।
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी,
मौर्य्यस्योरसि नाधुनाऽपि कुरुते वामेतरं श्रीः स्तनम् ॥१२॥

---

( १२ ) यदार्य्य आज्ञापयति । उपसर्पतु आर्य्यः ।

---

मौर्य्यस्य अचिरेण राज्याभिषेकेण राक्षसप्रयत्नतः अशङ्कयेन राजलक्ष्म्याः सम्पूर्णतया नाद्यापि तदाश्रयणमिति दर्शयन्नाह—वामामिति । श्रीः वामां, स्त्रीणां पतिवामभागे शयनविधानात् सुतरां प्रथमं वामभुजस्यैव पत्युः कण्ठे दानसम्भवादिति भावः, बाहुलतां भुजवल्लीं वेष्टनसाधर्म्यात् बाहौ लतात्वारोपः । तां कण्ठे शिथिलं न तु गाढं यथा तथा निवेश्य आसज्य यस्य राक्षसस्य उद्यमाशङ्किनी उद्योगभीता अत एव विवृत्तानना चकितस्य परावृत्य दर्शनोचितत्वात्, परावृत्तमुखी सती बलात् भयेन अनारोपणे पत्यैव स्वयं हठात् स्कन्धे स्वस्कन्धे निहितया अर्पितयापि मुहुः पुनः पुनः अङ्के क्रोडदेशे पतन्त्या पतनेन स्खलन्त्या दक्षिणया बाहुलतया इति शेषः, हेतुभूतया यत् गाढालिङ्गनं दृढालिङ्गनं तस्य सङ्गेन संसर्गेण यत् पीडितं पीडनं स्तनस्य इत्यर्थात्, तेन सुखं यत्र तत् यथा तथा, अधुनापि मौर्य्यस्य चन्द्रगुप्तस्य उरसि वक्षसि वामेतरं दक्षिणं स्तनं न कुरुते भयेन गाढालिङ्गनासम्भवात् । एतेनाद्यापि चन्द्रगुप्ते राज्यश्रीर्न अनुरक्ता तत्र राक्षसभयात् पुनराकर्षणभयमेव कारणमिति ध्वनितम् । अनाकुलरक्षा-

[ प्रकाशम् । ] जअदु जअदु, अमच्चो ( १३ ) ।

राक्ष । [ विलोक्य । ] अये विराध !—" [ इत्यर्द्धोक्ते (ढ) विरूढ़स्मृतिः । ] प्रियंवदक ! भुजङ्गैः इदानीं न विनोदयामः, तद्विश्रमयतां परिजनेन, त्वमपि स्वमधिकारम् अशून्यं कुरु (ण) ।

प्रियं । जं अमच्चो आणवेदि त्ति ( १४ ) । [ सपरिवारो निष्क्रान्तः । ]

राक्ष । सखे ! विराधगुप्त ! इदम् आसनम् आस्यताम् ।

विरा । यत् आज्ञापयति अमात्य इति । [ नाट्येन उपविष्टः । ]

राक्ष । [ सखेदं निर्वर्ण्य । ] अहो ! देवपादपद्मोपजीविनो जनस्य इयम् अवस्था इति । [ रोदिति । ]

विरा । अमात्य ! अलं शोकेन, न अतिचिरात् अमात्योऽस्मान् नूनं पुरातनीम् अवस्थाम् आरोपयिष्यति ।

राक्ष । सखे ! विराधगुप्त । वर्णय इदानीं कुसुमपुरवृत्तान्तम् ।

---

( १३ ) जयति जयति अमात्यः ।

( १४ ) यदमात्य आज्ञापयतीति ।

---

कान्तेव लक्ष्मी कान्तेन परिष्वक्ताऽपि न तं समालिङ्गतीति प्रस्तुतायां राजलक्ष्म्याम् अप्रस्तुतायाः विरागवत्याः नायिकायाः भयचकितत्वोगाढालिङ्गनत्वादि कार्य्यारोपात् समासोक्तिरलङ्कारः । "स एव:" इति गद्यस्थः एतच्छ्लोकेन विशेषितः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १२ ॥

( ढ ) आहितुण्डिकच्छद्मना प्रणिधितया प्रेषितस्य विराधगुप्तस्य प्रियंवदकसमीपे नामोच्चारणे मन्त्रप्रकाशनं स्यादित्यर्द्धोक्ते तस्य गोपनाय प्रियंवदकं प्रति छलेन ततोऽपसारणमिति द्रष्टव्यम् ।

( ण ) विरूढ़स्मृतिः जातस्मरणः । अशून्यं कुरु प्रतिपालय इत्यर्थः ।

विरा। अमात्य ! विस्तीर्णः कुसुमपुरवृत्तान्तः तदाज्ञापय कुतः प्रभृति कथयामि ?

राच। सखे ! चन्द्रगुप्तस्य तावत् नगरप्रवेशात् प्रभृति, मत्प्रणिधिभिः [मत्प्रयुक्तैः] तीक्ष्णरसदायिभिः किम् अनुष्ठितमिति आदितः श्रोतुमिच्छामि।

विरा। एष कथयामि। अस्ति तावत् शकयवनकिरातकाम्बोजपारसीकबाह्लीकप्रभृतिभिः चाणक्यमतिपरिगृहीतैः चन्द्रगुप्तपर्वतेश्वरबलैः उदधिभिः इव, प्रलयकालचलितसलिलसञ्चयैः, समन्तात् उपरुद्धं कुसुमपुरम्।

राच। [शस्त्रमाकृष्य ससम्भ्रमम्।] मयि स्थिते, कः कुसुमपुरम् अवरोत्स्यति ? प्रवीरक ! प्रवीरक ! क्षिप्रमिदानीम्—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम्।
मुक्त्वा मृत्युभयं प्रहर्त्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु, मया सहैकमनसो, येषामभीष्टं यशः॥ १३॥

---

वृत्तवृत्तान्तस्याखिलस्य न श्रुतौ राचसस्योत्साहातिशयात्तत्कालोचितकार्य्यकरणायाधिकारिणो नियोगं वर्णयति—प्राकारानिति। प्राकारान् प्राचीरान् परितः सर्वतः शरासनैर्धरैः शरा अस्यन्ते क्षिप्यन्ते अनेनेति शरासनं धनुः तद्धरैः धानुष्कैः क्षिप्रं क्षेपणीयम् आशुगं वा अस्त्रं परिक्षिप्यताम्। अनेन तत् क्षेपणे हि शत्रूणा प्रवेशासम्भवात् तथोपदेशः बोद्धः। श्लोकेऽत्र क्षिप्रमिति पदं न क्रियाविशेषणं, पूर्वोक्तगद्ये तत्पदप्रयोगाद् प्रत्यक्कक्रियानुषङ्गत्वं तस्य इह बोद्धव्यम्। परद्विपघटाभेदक्षमैः शत्रुपक्षीयहस्तिसमूहनिवारणक्षमैः द्विरदैः हस्तिभिः द्वारेषु स्थीयतां प्राचीरात् अस्त्रक्षेपणेन पुरद्वारेषु प्रबलहस्तिवृन्दरक्षणेन शत्रूणां पुरप्रवेशासम्भवाय तथोपदेशः। एवं स्वदुर्गरक्षामुपदिश्य आत्मना सह बलनिर्गममुपदिशति—मुक्त्वेत्यादि। किञ्च येषां यशः कीर्त्तिरेवाभीष्टम् अभिलषितं ये यशःप्रार्थिनः इत्यर्थः ते निर्यान्तु, स्वामिमरणेऽपि युद्धादौ प्रवृत्तिर्न स्वामिसन्तोषायाऽपि तु यशोर्थायेति भावः। भीरूणां रणप्रवेशासम्भवादाह—मृत्युभयं मुक्त्वा त्यक्त्वा मया सह (अस्वाधीनः निवृत्ताद्वृतावारणाय मया सह इत्युक्तम्।)

विरा। अमात्य! अलमावेगेन? वृत्तमिदं वर्ण्यते।

राक्ष। कथं वृत्तमिदम्? मया पुनर्ज्ञातं स एव कालो वर्त्तते इति। [शस्त्रमुत्सृज्य सास्रम्।] हा देव नन्द! स्मरति ते राक्षसः प्रसादानां यस्तु एवंविधे काले—

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र यायात्
एतत् पारिप्लवाम्भःप्लुति तुरगबलं धार्य्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं न [न्तर्न] यतु बलमिति प्रेषयन्मह्यमाज्ञाम्
अज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम्॥१४॥

ततस्ततः?

विरा। ततः समन्तात् उपरुद्धं पुष्पपुरम् अवलोक्य, बहुदिवसप्रभृति महत् उपरोधवैशसम्(त) उपरि पौराणां परिवर्त्त-

---

एकमनसः अभिन्नमतयः (एतच्च विशेषणं स्वामिनो विनाशेऽपि यथा स्वामिभक्त्यनुसारेण मया प्रयत्यते एवं मया तुल्यरूपाः प्रवर्त्तन्तामिति दर्शनाय।) अत एव प्रहृष्टं मनो येषां तादृशाः युयुत्सवः सन्तः शत्रोः दुर्बले बलहीने पराक्रमकौशलाद्यभावात् सुजये इत्यर्थः, बले सैन्ये निर्यान्तु, पुरादिति शेषः प्रविशन्तु इत्यर्थः। शार्दूलविक्रीडितं छन्दः॥ १३॥

यत्रेति।—यत्र रणप्रदेशे एषा मेघनीला मेघवत् श्यामला गजघटा हस्तिवृन्दं चलति तत्र राक्षसः यायात् युद्धाभिमुखीभूय गच्छेत्। पारिप्लवं चञ्चलं यत् अम्भः जलं तस्य इव प्लुतिः गतिविशेषो यस्य तादृशमेतत् विपक्षस्य तुरगबलम् अश्वसैन्यं राक्षसेन धार्य्यताम् अवलम्ब्यताम् प्रतिरुध्यतामिति यावत्। राक्षसः पत्तीनां पदातीनां एतत् बलं अन्तं नाशं नयतु प्रापयतु। [अन्तरिति पाठे—पत्तीनां शत्रुपदातीनाम् अन्तः मध्ये बलं स्वबलं सैन्यं नयतु प्रापयतु।] इति एवम्प्रकारेण मह्यं मां प्रति इत्यर्थः, आज्ञां प्रेषयन् स्नेहयोगात् प्रीतिहेतोः इह नगरे राक्षसानां सहस्रं स्थितम् अज्ञासीः सहस्रकार्य्यकारितया मां राक्षससहस्रमिव सम्भावितवान् उत्प्रेक्षसे इत्यर्थः। अज्ञासीरित्यत्र वर्त्तमानसामीप्ये लुङ्। स्रग्धरा वृत्तम्॥ १४॥

(त) उपरुद्धं सैन्यवेष्टितम्। उपरोधवैशसम् उपरोधेन वैशसम् अत्याचाररूपम्।

मानम् असहमाने, तस्याम् अवस्थायां, पौरजनापेक्षया, सुरङ्गामुपेत्य अपक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ, स्वामिविरहात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु, जयघोषणाव्या-(ज्या) घातादिसाहसानुमितान्तर्नगरवासेषु (थ) पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गाम् अधिगतेषु युष्मासु, चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि (द) पर्वतेश्वरे—

राक्ष । सखे ! पश्य आश्चर्यम्,—

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता,
हन्तुं शक्तिरिवार्जुनं बलवती, या चन्द्रगुप्तं मया ।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्वतनृपं तद्बध्यमेवावधीत् ॥ १५ ॥

---

( थ ) जयघोषणाव्याघातादिसाहसानुमितान्तर्नगरवासेषु जयघोषणा मौर्य्यस्येति शेषः तस्याः व्याघातः विरुद्धाचरणम् आदिर्येषां तैः साहसैः बलकृतकार्य्यैः अनुमितः शत्रुभिरित्यर्थात् गम्यते। अन्तर्नगरवासः नगरमध्यावस्थानं येषां तादृशेषु युष्मासु इत्यस्य विशेषणम् । [पाठान्तरे—जयघोषणाव्याघातादिरूपं यत् साहसं सहसा बलेन कार्य्यं तदनुमितम् । ] यैः निष्ठान्तस्य परनिपातः ।

( द ) तपस्विनि वराके निरपराधिनीत्यर्थः ।

कर्णेनेति ।—कर्णेनेव यथा अर्जुनमिव चन्द्रगुप्तं हन्तुं बलवती कृतसाम एकपुरुषव्यापादिनी एकपुरुषघातिनी शक्तिरिव इन्द्रदत्तशक्तिनामास्त्रविशेष इव या विषाङ्गना विषकन्या रक्षिता स्थापिता सा विष्णोरिव कृष्णस्येव विष्णुगुप्तहतकस्य चाणक्यहतकस्य अनुमत्या इति शेषः, आत्यन्तिकश्रेयसे समधिकप्रीत्यर्थम् अर्जुनस्येव चन्द्रगुप्तस्य इत्यर्थात् तद्बध्यं तस्य विषाङ्गनायाः बध्यं पक्षे परिपणितराज्यार्द्धदानभीरोः चाणक्यस्य बध्यमेव हैडिम्बेयमिव हिडिम्बातनयं घटोत्कचमिव पर्वतनृपम् एत्य प्राप्य अवधीत् । सहजकवचकुण्डलादानेन एकपुरुषघातिनी शक्तिरिन्द्रेण कर्णाय दत्ता । ततः रात्रियुद्धे अतिविक्रान्तं घटोत्कचं कथमपि वारयितुमशक्नुवन् कर्णः अर्जुनबधार्थं रक्षितया एकपुरुषघातिन्या शक्त्या निहतवानिति महाभारतीयकथाऽत्रानुसन्धेया । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

विरा। अमात्य! देवस्य अत्र कामचारः, किमत्र क्रियते?

राक्ष। ततस्ततः?

विरा। ततः पितृवधपरित्रासात् अपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते च पर्वतकभ्रातरि वैरोध [च] के, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेन आहूय अभिहिताः कुसुमपुरनिवासिनः सर्वे एव सूत्रधाराः, यथा सांवत्सरिकवचनात् अद्यैव अर्द्धरात्रसमये एवाभिमतः चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः, प्रथमद्वारात् प्रभृति संस्क्रियतां राजभवनमिति। ततः सूत्रधारैः अभिहितम्, आर्य्य! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशम् उपलभ्य सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराजद्वारम्। इदानीम् अस्माभिः अभ्यन्तरे संस्कारो विधेय इति। ततः चाणक्यवटुना, अनादिष्टेनैव दारुवर्मणा संस्कृतं राजभवनद्वारम् इति परितुष्टेन, दारुवर्मणः सुचिरं दाक्ष्यम् (ध) अभिनन्द्य अभिहितम् अचिरादस्य दाक्ष्यस्य अनुरूपं फलं दारुवर्मा अधिगमिष्यति।

राक्ष। [सोद्वेगम्।] सखे! कुतः चाणक्यवटोः परितोषः, अफलम् अनिष्टफलं वा दारुवर्मणः प्रयत्नम् अवगच्छामि। यदनेन बुद्धिमोहात्, अथवा राजभक्तिप्रकर्षात्, [नियोग] कालम् अप्रतीक्षमाणेन, सञ्जनितः चाणक्यवटोः चेतसि बलवान् विकल्पः (न)। ततस्ततः?

विरा। ततः चाणक्यहतकेन अनुकूललग्नवशात् अद्य अर्द्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति,

---

(ध) सांवत्सरिकवचनात् दैवज्ञवचनात्। उपलभ्य ज्ञात्वा। दाक्ष्यं नैपुण्यम्।

(न) विकल्पः संशयः।

शिल्पिनः पौरांश्च गृहीत [ तार्थान् ] समयान् कृत्वा, तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोधक [च] मेकासने चन्द्रगुप्तेन सह उपवेश्य, कृतः पृथ्वीराज्यार्द्धभागः ।

राक्ष । किं श्च अतिसृष्टं[ष्टः] (प) पर्वतेश्वरभ्रात्रे वैरोध[च]काय पूर्व्वप्रतिश्रुतं [तः] राज्या[र्द्धभागः]र्द्धमिति ?

विरा । अमात्य ! अथ किम् ।

राक्ष । [ आत्मगतम् । ] नियतम् अतिधूर्त्तवटुना तस्यापि तपस्विनः कमपि उपांशुबधम् आकलय्य पर्वतेश्वरविनाशजनितस्य अयशसः परिहारार्थम् एषा लोकप्र[सिद्धिः]तिपत्तिः उपचरिता (फ) । [ प्रकाशम् । ] ततस्ततः ?

विरा । ततः प्रथममेव प्रकाशीकृते चन्द्रगुप्तस्य अर्द्धरात्रे नन्दभवनप्रवेशे, कृताभिषेके च वैरोध(च)के, हिमविमलमुक्तागुणपरिक्षेपोपरचितपटुवारवाणप्रच्छादितशरीरे, ( ब ) मणिमयमुकुटपटुबन्धनिविड़नियतरुचिरतरमौलौ, सुरभिकुसुमदामवैकक्षिकावभासितवक्षःस्थले, ( भ ) परिचितदर्शनैरपि अनभिज्ञायमाने, नृपाकृतौ (म) चाणक्यहतकस्य आज्ञया चन्द्र-

---

(प) अतिसृष्टं दत्तम् ।

( फ ) उपांशुबधं रहस्यहननम् । आकलय्य अवधार्य्य । लोकानां प्रतिपत्तिः निश्चयः, प्रसिद्धिरिति पाठे—लोकेषु प्रसिद्धिः प्रख्यापनमित्यर्थः । उपरचिता कल्पिता ।

( ब ) हिम इव विमलः स्वच्छः यः मुक्तागुणः मुक्ताहारः तस्य परिक्षेपः शोभार्थं परितः प्रदानं तेन उपरचितः निर्मितः पटुः उज्ज्वलः यो वारवाणः वर्म्म, तेन प्रच्छादितं शरीरं यस्य तादृशे । एतेन वैरोधकस्य नाभिज्ञानं न भविष्यतीति तथोक्तम् ।

( भ ) सुरभि सुगन्धि यत् कुसुमदाम पुष्पमाल्यं तदेव वैकक्षिकं यज्ञोपवीतवत् तिर्य्यग्लम्बि एकपार्श्वस्कन्धं व्याप्य अपरपार्श्वस्थकुक्षिपर्य्यन्तविसृतः हारः तेन अवभासितं शोभितं वक्षःस्थलं यस्य तादृशे ।

( म ) नृपाकृतौ चन्द्रगुप्तवत् अभिज्ञायमाने इत्यर्थः ।

गुप्तोपवाह्यां (य) चन्द्रलेखाभिधानां नागवशाम् आरुह्य, चन्द्रगुप्तानुयायिना (र) राजलोकेन अनुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोध(च)के, युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्मणा, चन्द्रगुप्तोऽयमिति मन्यमानेन, वैरोध(च)कस्य उपरि निपातनाय सज्जीकृतं यन्त्रतोरणम् (ल)। अत्रान्तरे, बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना वर्वरकेण, कनकदण्डान्तर्निहिताम् असिपुत्रिकाम् आकष्टुंकामेन अवलम्बिता करेण, कनकशृङ्खलामुखावलम्बिनी कनकदण्डिका (व)।

राक्ष। उभयोरपि अस्थाने यत्नः। ततस्ततः?

विरा। अथ जघनाभिघातम् उत्प्रेक्षमाणा गजवधूः अतिजवनतया गत्यन्तरम् आरूढवती (श)। ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन भ्रष्टलक्ष्यं पतता यन्त्रतोरणेन आकृष्टकृपाणीको व्यग्रपाणिः अनासाद्यैव चन्द्रगुप्तप्रत्याशया वैरोध(च)कं, दारुवर्मणा हतः तपस्वी वर्वरकः। ततो दारुवर्मणा, यन्त्रतोरणपातम् आत्मविनाशफलम् अवधार्य्य शीघ्रमेव उत्तुङ्गतोरण-

---

(य) चन्द्रगुप्तोपवाह्या चन्द्रगुप्तः उपवाह्यः यस्याः चन्द्रगुप्तवाहिनीमित्यर्थः।

(र) नागवशां नागा वशा तां, हस्तिनीमित्यर्थः "पोटा युवति—" इत्यादिना परनिपातः। चन्द्रगुप्तानुयायिनेत्युक्तिश्चन्द्रगुप्तभ्रमसम्पादनार्थम्।

(ल) यन्त्रतोरणं तोरणरूपेण निर्मितं यन्त्रमित्यर्थः।

(व) असिपुत्रिकां छुरिकामित्यर्थः। कनकशृङ्खला स्वर्णहारः मुखावलम्बिनी मुखे लम्बमाना यस्याः तादृशी। कनकदण्डिका स्वर्णयष्टिः।

(श) उत्प्रेक्षमाणा असहमाना। अतिजवनतया अतिवेगेन। गत्यन्तरम् अन्यां गतिं त्वरितगतिमित्यर्थः। आरूढवती आश्रिता।

स्थानम् आरूढ़ेन, यन्त्रघटनबीजलोहकीलकम् (ष) आदाय हस्तिनीगत एव हतः तपस्वी वैरोध(च)कः।

राक्ष। हा कष्टम् अनर्थद्वयमापतितम्। न हतः चन्द्रगुप्तोऽसौ, हतौ वैरोध(च)कवर्वरकौ! [ सावेगमात्मगतम्। ] न एतौ उभौ हतौ, दैवेन वयमेव हताः। [ प्रकाशम्। ] अथ स सूत्रधारो दारुवर्मा क्व?

विरा। वैरोध(च)कपुरःसरैः पदातिलोकैर्लोष्टघातं हतः। (स)

राक्ष। [सास्त्रम्।] कष्टं भोः कष्टम्! अहो! वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्मः। अथ तेन तत्र भिषजा अभयदत्तेन किमनुष्ठितम्?

विरा। अमात्य! सर्वमनुष्ठितम्।

राक्ष। [सहर्षम्।] अपि नाम सखे! हतः चन्द्रगुप्तहतकः?

विरा। अमात्य! दैवात् न हतः।

राक्ष। [ सविषादम्। ] तत् किमिदानीं कथयसि परितुष्टः सर्वम् अनुष्ठितमिति?

विरा। अमात्य! कल्पितम् अनेन विषचूर्णमिश्रम् औषधं चन्द्रगुप्ताय। तच्च प्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरम् उपगतम् उपलभ्य अभिहितः चन्द्रगुप्तः, वृषल! वृषल! सविषम् औषधं, न पातव्यमिति।

---

(ष) प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन—प्रथमा या गतिः मन्दगतिरित्यर्थः तदनुरोधेन प्रत्याकलितं धृतं मुक्तञ्च तेन। भ्रष्टलक्ष्यं भ्रष्टम् अतिक्रान्तं लक्ष्यं यत्र तत् यथा तथा। व्यग्रपाणिः प्रहारार्थमुद्यतकर इत्यर्थः। यन्त्रघटनबीजलोहकीलकं यन्त्रनिर्माणहेतुभूतं लोहकीलकम्।

(स) लोष्टैर्हत्वा इति लोष्टघातं हन्तेः णमुल्। हतः नाशितः। कषादिषु यथाविध्यनुप्रयोगानुशासनात् द्विर्हन्तेः प्रयोगः।

राक्ष। शठः खलु असौ वटुः। अथ स वैद्यः कथम् (ङ) ?

विरा। स खलु वैद्यः तदेव औषधं पायित उपरतश्च (च)।

राक्ष। [ सविषादम्। ] अहह! महान् विज्ञानराशिः उपरतः! भद्र! अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम् ?

विरा। आत्मविनाशः।

राक्ष। [सोद्वेगम्। ] कथमिव ?

विरा। स खलु मूर्खः तं युष्माभिः अतिसृष्टं (क) महान्तम् अर्थराशिम् अवाप्य, महता व्ययेन उपभोक्तुम् आरब्धवान्। ततः कुतोऽयं भूयान् धनागमः तवेति पृच्छ्यमानोऽयं, यदा वाक्यभेदान् बहून् अकथयत् तदा चाणक्यहतकादेशात् विचित्रेण बधेन व्यापादितः (ख)।

राक्ष। [ सोद्वेगम् ] कथम् अत्रापि वयमेव उपहता दैवेन ? अथ, शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्य अन्तःसुरङ्गायां निवसतां, बीभत्सकादीनां को वृत्तान्तः ?

विरा। अमात्य! दारुणो वृत्तान्तः।

राक्ष। [ सावेगम् ] कथं दारुणो वृत्तान्तः? न खलु विदिताः (ग) ते तत्र निवसन्तः चाणक्यहतकेन ?

विरा। अथ किम्।

---

(ङ) अभवत् इति शेषः।

(च) पायितः राज्ञा इति शेषः। उपरतः मृतः।

(क) अतिसृष्टं दत्तम्।

(ख) वाक्यभेदान् परस्परविरोधीनि वचनानि इत्यर्थः। बधेन बधसाधनेन, व्यापादितः मारितः।

(ग) न खलु इति प्रश्नार्थमव्ययम्, "विदिताः किम् ?" इत्यर्थः।

राच। कथमिव ?

विरा। प्राक् चन्द्रगुप्तप्रवेशात्, प्रविष्टमात्रेण एव शयनगृहे चाणक्येन दुरात्मना समन्तात् अवलोकिते ततस्तु एकस्मात् भित्तिच्छिद्रात् गृहीतभक्तावयवानां पिपीलिकानां पङ्क्तिम् [ गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकाम् ] अवलोक्य, पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन दाहितं तदन्तःशयनगृहम्। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टिविषयाः प्रथमसपिहितनिर्गमनमार्गम् अनधिगम्य [ अनुपलभ्य द्वारम् ] सर्वे एव बीभत्सादयः तत्रैव ज्वलनम् उपगता उपरताश्च।

राच। [ सास्रम्। ] सखे ! पश्य, चन्द्रगुप्तस्य दैवसम्पदा सर्वे एव उपरताः [ सचिन्तम्। ] सखे ! दैवसम्पदं पश्य दुरात्मनः चन्द्रगुप्तहतकस्य। कुतः ?—

कन्या तस्य बधाय या विषमयी गूढं प्रयुक्ता मया,
दैवात् पर्वतकस्तया विनिहतो, यस्तस्य राज्यार्द्धभाक्।
ये यन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः,
मौर्य्यस्यैव फलन्ति, पश्य, विविधश्रेयांसि मे नीतयः॥१६॥

विरा। अमात्य ! तथापि प्रारब्धम् अपरित्याज्यमेव। पश्यतु अमात्यः,—

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः।

---

कन्येति।—मया तस्य चन्द्रगुप्तस्य बधाय या विषमयी कन्या गूढं प्रयुक्ता प्रेषिता, दैवात् भाग्यवशात् तया यः तस्य राज्यार्द्धभाक् परिपणितार्द्धराज्याधिकारी पर्वतकः स एव विनिहतः व्यापादितः। ये दारुवर्मादयः यन्त्रेषु च रसेषु च प्रणिहिताः मया इति शेषः तैः यन्त्रविषादिभिरेव ते विनाशिताः, अतः पश्य मे नीतयः उपायाः मौर्य्यस्य एव विविधश्रेयांसि प्रभूतानि मङ्गलानि फलन्ति जनयन्ति मत्कृतोपायैः विषकन्यादिभिस्तदीयानिष्टनिवारणादित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १६॥

विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥ १७ ॥

अपि च,—

किं शेषस्य भरव्यथा न वपुषि, क्ष्मां न क्षिपत्येष यत्,
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते,
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १८ ॥

राज । सखे ! प्रारब्धम् अपरित्याज्यमिति प्रत्यक्षम् एतद्भवतः । ततस्ततः ?

विरा । ततः प्रभृति चाणक्यहतकः चन्द्रगुप्तस्य शरीरं, सहस्रगुणम् अप्रमत्तः, एभ्य एव ईदृशं भविष्यतीति, अन्विष्य अन्विष्य निगृहीतवान् कुसुमपुरनिवासिनो नन्दामात्यपुरुषान् ।

राक्ष । [सावेगम् ।] वयस्य ! अथ के के निगृहीताः ?

---

प्रारभ्यत इति ।—नीचैः क्षुद्रैः विघ्नभयेन न खलु नैव प्रारभ्यते उद्युज्यते कार्यं मिति शेषः, मध्याः प्रारभ्य विघ्नेन निहताः सन्तः विरमन्ति आरब्धकार्य्यादिति शेष प्रारब्धं त्यजन्तीत्यर्थः । उत्तमगुणा महान्तः त्वमिव विघ्नैः पुनःपुनः प्रतिहन्यमाना अपि प्रारब्धम् उद्वहन्ति न त्यजन्तीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १७ ॥

किं शेषस्येति ।—शेषस्य अनन्तनागस्य वपुषि देहे भरव्यथा भूधारणजनितक्लेश किं न भवति ? अपि तु भवत्येव ; किन्तु एष शेषः क्ष्मां पृथिवीं न क्षिपति न त्यजति तादृशभारसत्त्वेऽपि न तस्याः क्षेपः क्रियते इति यत् ; दिनपतेः सूर्य्यस्य परिश्रमः किं नास्ति ? अपितु अस्ति एव ; तथापि निश्चलः न आस्ते न तिष्ठतीति यत्, श्लाघ्यः महान् जनः कृपणवत् क्षुद्रेण तुल्यं यथा तथा अङ्गीकृतम् उत्सृजन् त्यजन् किं न लज्जते ? अपि तु लज्जत एव, इति यत्, एतत् प्रतिपन्नवस्तुषु अङ्गीकृतविषयेषु निर्वाहः प्रतिपालनं सतां साधूनां गोत्रव्रतं कुलाचारः । साधवः कष्टमपि अङ्गीकृतं न त्यजन्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

विरा। अमात्य! आदौ एव तावत् क्षपणको जीवसिद्धिः सनिकारं नगरात् निर्वासितः।

राक्ष। [ आत्मगतम्। ] एतावत् सह्यं, न निष्परिग्रहं (घ) स्थानपरिभ्रंशः पीड़यिष्यति। [ प्रकाशम्। ] सखे! कमपराधम् उद्दिश्य निर्वासित एषः?

विरा। एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं घातितवानिति।

राक्ष। [ स्वगतम् ] साधु कौटिल्य! साधु।—

परिहृतमयशः पातितमस्मासु च, घातितोऽर्द्धराज्यहरः।
एकमपि नीतिवीजं बहुफलतामेति यस्य तव ॥१८॥

[ प्रकाशम्। ] ततस्ततः?

विरा। ततः चन्द्रगुप्तशरीरम् अभिद्रोग्धुम् अनेन व्यापारिताः (ङ) दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः।

राक्ष। [ सास्रम्। ] हा सखे! शकटदास! अयुक्तः तव अयमीदृशो मृत्युः। अथवा, स्वाम्यर्थम् उपरतो न शोच्यस्त्वमसि। वयमेव अत्र शोच्याः ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः।

विरा। अमात्य! न एतदेवं, स्वाम्यर्थ एव साधयितव्यः।

राक्ष। सखे!—

(घ) निष्परिग्रहं विषयाभिलाषरहितं तेन गृहशून्यता तं न दुःखाकरोतीत्यर्थः।

परिहृतमिति।—अयशः पर्वतेश्वरवधजनितमिति शेषः अकीर्त्तिः अस्मासु पातितं संक्रामितम् अर्द्धराज्यहरः परिपणितराज्यार्द्धभागी पर्वतेश्वर इति शेषः घातितः नाशितश्च यस्य तव एकमपि नीतिवीजं क्षपणकनिर्वासनरूपं बहुफलतां पूर्वोक्तफलत्रयाधायकताम् एति प्राप्नोति त्रिविधं फलं जनयतीत्यर्थः। आर्य्या वृत्तम् ॥ १९ ॥

(ङ) अनेन शकटदासेन, व्यापारिताः नियोजिताः।

अस्माकममुमेवार्थमवलम्ब्य जिजीविषा।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥

विरा। अमात्य! न एतत् एवम्। [अस्माकममुमेवार्थम् इत्यादि पुनः पठति] (च)।

राक्ष। सखे! कथ्यताम् अपरस्यापि सुहृद्व्यसनप्रातस्य श्रवणे सज्जा वयम्।

विरा। तत एतत् उपलभ्य, चन्दनदासेन उपरूढसाध्वसेन अपवाहितम् (छ) अमात्यकलत्रम्।

राक्ष। सखे! क्रूरस्य चाणक्यवटोः किं विरुद्धम् अनुष्ठितं चन्दनदासेन?

विरा। अमात्य! ननु अयुक्ततरः सुहृद्द्रोहः।

राक्ष। ततस्ततः?

विरा। ततो याच्यमानेनापि यदा न समर्पितम् अनेन अमात्यकलत्रं ततः कुपितेन चाणक्यवटुना—"।

राक्ष। "स खलु व्यापादितः?

---

अस्माकमिति।—अमुमेव स्वाम्यर्थमेव स्वामिकार्य्यं वैरनिर्य्यातनरूपमेव इत्यर्थः अवलम्ब्य आश्रित्य अस्माकं जिजीविषा जीवनेच्छा। एषापि न श्रेयसी प्रवृत्तिः इत्याशयेनाह—परलोक इति। कृतघ्नैः कृतोपकारानभिज्ञैः जनैः परलोकगतः देवः न अनुगम्यते अनुस्रियते इत्यर्थः। अनुष्टुब्वृत्तम् ॥ २० ॥

(च) नैतदेवम् अस्माकममुमेवार्थमित्यत्र कृतघ्नैरिति पदं कृतज्ञैरित्यनेन परिवर्त्त्य पठति। कृतज्ञास्तत्कार्य्यसाधनेनैव तत्परितोषो भवेदित्याशयेन वृथा तदनुगमनमिति मन्यन्ते इति भावः। पाठपरिवर्त्तनाकरणे कृतघ्नैरित्यत्र इवादिपदाध्याहारः कर्त्तव्यः। स च न समीचीनतया प्रतिभाति।

(छ) उपरूढसाध्वसेन सञ्जातत्रासेन। अपवाहितं स्थानान्तरं प्रापितम्।

विरा । अमात्य ! न खलु व्यापादितः, किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य बन्धनागारे निक्षिप्तः ।

राक्ष । ततः किं परितुष्टः कथयसि अपवाहितम् अनेन राक्षसकलत्रम् इति ? ननु वक्तव्यं संयतः सपुत्रकलत्रो राक्षस इति । (ज)

[ प्रविश्य पटाक्षेपेण ( झ ) पुरुषः । ] जअदु जअदु, अज्जो । अज्ज ! एसो क्खु सअडदासो पड़िहारभूमिमुवत्थिदो (१५) ( ञ ) ।

राक्ष । प्रियंवदक ! अपि सत्यम् ?

प्रियं । अलिअं किं अमच्चपादोपजीविणो मन्तिदुं जाणन्ति ? ( १६ )

राक्ष । सखे ! विराधगुप्त ! किम् एतत् ?

विरा । अमात्य ! रक्षति खलु भव्यं भवितव्यता ।

राक्ष । प्रियंवदक ! यदि एवं तत् किं चिरयसि ? क्षिप्रं प्रवेशय तम् ।

प्रियं । जं अमच्चो आणवेदि त्ति (१७) । [ निष्क्रान्तः । ]

( १५ ) जयति, जयति आर्य्यः । आर्य्य ! एष खलु शकटदासः प्रतिहारभूमिमुपस्थितः ।

( १६ ) अलीकं किम् अमात्यपादोपजीविनो मन्त्रयितुं जानन्ति ?

( १७ ) यदमात्य आज्ञापयति इति ।

( ज ) तदप्यनेनैव सकलत्रोऽहं बद्धः सुहृदोरुभयोरभिन्नहृदयत्वादित्यर्थः ।

( झ ) पटाक्षेपेण पटस्य जवनिकारूपस्य अक्षेपेण, क्षेपम् अपसारणं विना । ए३ तत्पार्श्वदेशेन इत्यर्थः ।

( ञ ) प्रतिहारभूमिं द्वारदेशम् ।

[ ततः प्रविशति सिद्धार्थकेन अनुगम्यमानः शकटदासः। ]

शक। [ दृष्ट्वा आत्मगतम्। ]

दृष्ट्वा मौर्य्यमिव प्रतिष्ठितपदं शूलं धरित्र्यास्तले
तल्लक्ष्मीमिव चेतसः [ना] प्रमथिनीमुन्मुच्य वध्यस्रजम्।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाध्मानतूर्य्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः ॥ २१ ॥

[ नाट्येन अवलोक्य सहर्षम्। ] अयम् अमात्यराक्षसः तिष्ठति, य एषः,—

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन्।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥ २२ ॥

[ उपसृत्य ]। जयति अमात्यः।

राक्ष। [नाट्येन अवलोक्य सहर्षम्।] सखे ! शकटदास ! दिष्ट्या कौटिल्यगोचरगतोऽपि दृष्टोऽसि, तत् परिष्वजस्व माम्।

---

दृष्टेति।—धरित्र्यास्तले भूमौ मौर्य्यं चन्द्रगुप्तमिव प्रतिष्ठितपदं लब्धप्रतिष्ठं स्थापित-मूलञ्च शूलं मदर्थमिति शेषः दृष्ट्वा तल्लक्ष्मीं तस्य चन्द्रगुप्तस्य लक्ष्मीमिव चेतसः प्रमथिनीं चित्तविदारिणीं, (पाठान्तरे—चेतनायाः बुद्धेः प्रमथिनीं) वध्यस्रजं वध्यचिह्नभूतां मालाम् उन्मुच्य परिधाय, स्वाम्युपरोधरौद्रविषमान् स्वामिनः नन्दस्य उपरोधेन हिंसनेन रौद्रान् घोरान् विषमान् अश्राव्यान् आध्मानतूर्य्यस्वनान् घोषणावाद्यशब्दान् श्रुत्वा मदीयं मनः प्रथमाभिघातकठिनं प्रथमाभिघातेन स्वामिवधरूपताड़नेन कठिनम् अत एव न ध्वस्तं न आहतं मन्ये। लोके हि किञ्चित् वस्तु भूयोभूय आहतं सत् कठिनं भवतीति प्रसिद्धम्। अतः काठिन्यान्न ध्वस्तमिति भावः। प्रथमाभिघातकठिनमतो न ध्वस्तमित्यत्र ध्वस्तमित्यस्य प्रथमाभिघातकठिनमिति हेतुतया काव्यलिङ्गेनानुप्राणितो मन्येशब्दप्रयोग-निबन्धनोत्प्रेक्षालङ्कारः। स च मौर्य्यश्मशानशूलयो राज्यश्रीवध्यस्रजोश्चोपमानोपमेयभाव-कल्पनया, प्रतिष्ठितपदमित्यादिश्लिष्टपदेनोत्थापितत्वाच्च श्लेषानुप्राणितोपमालङ्कारेण संसृष्टः। इत्यलङ्कारेण वस्तुध्वनिः असूया द्योतिका, अयोग्यैः श्मशानशूलादिभिरुपमानैः नरनाथचन्द्रगुप्तादेः संतुलनात्। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

अक्षीणभक्तिरिति।—नन्दे क्षीणेऽपि अक्षीणभक्तिः स्वाम्यर्थं स्वामिकार्य्यं वैरनिर्य्या-

शक । [ तथा करोति । ]

राक्ष । [ तं परिष्वज्य । ] इदम् आसनम्, आस्यताम् ।

शक । यत् आज्ञापयति अमात्यः । [ इति नाट्येन उपविष्टः । ]

राक्ष । सखे ! शकटदास ! अथ कोऽयम् अस्य मे हृदयानन्दस्य हेतुः ?

शक । [सिद्धार्थकं निर्दिश्य ।] अमात्य ! प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य (ट) वध्यस्थानात् अपवाहितोऽस्मि ।

राक्ष । [सहर्षम् ।] भद्र ! सिद्धार्थक ! कामम् अपर्य्याप्तम् इदम् अस्य प्रियस्य, तथापि गृह्यताम् ।

[ इति स्वगात्रात् अवतार्य्य भूषणानि (ठ) प्रयच्छति । ]

सिद्धा । [ गृहीत्वा पादयोर्निपत्य स्वगतम् । ] एदं क्खु अज्जोवदेसेण (ड) करिस्सं । [ प्रकाशम् । ] अमच्च ! एत्थ मे पढमप्पविट्ठस्स णत्थि कोवि परिचिदो, जहिं एदं अमच्चस्स प्पसादं णिक्खिविअ णिव्वुदो भविस्सं, ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्स ज्जेव भाण्डागारे णिक्खिविदुं जदा मे एदिणा प्पओअणं भविस्सदि, तदा गेह्लिस्सं( १८) ।

(१८) इदं खलु आर्य्योपदेशेन करिष्यामि । अमात्य ! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः, यत्र इमम् अमात्यस्य प्रसादं निक्षिप्य निर्वृतो भविष्यामि, तदिच्छामि अहम् एतया मुद्रया मुद्रितम् अमात्यस्य एव भाण्डागारे निक्षेप्तुम् । यदा मम एतेन प्रयोजनं भविष्यति, तदा ग्रहीष्यामि ।

तनरूपम् उद्वहन् साधयन् पृथिव्यां स्वामिभक्तानां परमे प्रमाणे दृष्टान्ते स्थितः । अनुष्टुप् वृत्तम् ॥ २२ ॥

( ट ) विद्राव्य ताड़यित्वा ।

( ठ ) भूषणानि मलयकेतुना प्रागृदत्तानि, तेन तद्भूषणानां लेख्यपत्रसहभावेन सिद्धार्थकेन स्थापनादुत्तरत्र लेख्यस्य सत्यतायाः प्रचुरकारणसम्पत्तिर्भविष्यतीत्यनुसन्धेयम् ।

( ड ) आर्य्योपदेशेन आर्य्यस्य चाणक्यस्य उपदेशेन आदेशेन तदनुसारेणेत्यर्थः ।

राक्ष। भद्र! भवतु, को दोषः? शकटदास! एवं क्रियताम्।

शक। यत् आज्ञापयति अमात्य इति। [मुद्रां विलोक्य जनान्तिकम् (ढ)।] अमात्य! भवन्नामाङ्किता इयं मुद्रा।

राक्ष। [विलोक्य सविषादं सवितर्कम् आत्मगतम्।] कष्टं, मदुत्कण्ठाविनोदार्थं नगरात् निष्क्रामतो मम हस्तात् ब्राह्मण्या गृहीता, तत् कथम् अस्य हस्तम् उपगता? [प्रकाशम्।] भद्र! सिद्धार्थक! कुतः त्वया इयम् अधिगता?

सिद्धा। अमच्च! अत्थि कुसुमपुरणिवासी मणिआरसेट्ठी चन्दणदासो णाम। तस्स गेहदुआरे भूमिए पड़िदा, मए समासादिदा [लद्धा] (१९)।

राक्ष। युज्यते।

सिद्धा। अमच्च! किं एत्थ जुज्जदि? (२०)।

राक्ष। भद्र! यतो महाधनानां द्वारि पतितस्य एवंविधस्य उपलब्धिः, इति।

शक। सखे! सिद्धार्थक! अमात्यनामाङ्किता इयं मुद्रा, तदितो बहुतरेण अर्थेन भवन्तम् अमात्यः तोषयिष्यति, तत् दीयताम् एषा मुद्रा।

---

(१९) अमात्य! अस्ति कुसुमपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम। तस्य गेहद्वारे भूमौ पतिता, मया समासादिता। (पाठान्तरे लब्धा।)

(२०) अमात्य! किमत्र युज्यते?

---

(ढ) जनान्तिकं कर्णे कथनं "जनान्तिकन्तु तत् प्रोक्तं यत् तृतीयाद्यगोचरम्", इति तथा "त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम्"॥ इति लक्षणात्।

सिद्धा। अज्ज! एसो मे परितोसो, जं अमच्चो इमाए मुद्दाए परिग्गहप्पसादं करोदि त्ति (२१)। [मुद्रां समर्पयति।]

राक्ष। सखे! शकटदास! अनया एव मुद्रया स्वाधिकारे व्यवहर्त्तव्यं भवता।

शक। यत् आज्ञापयति अमात्य इति।

सिद्धा। अमच्च! विसवेमि किं पि (२२)।

राक्ष। भद्र! विस्रब्धं ब्रूहि।

सिद्धा। जाणादि ज्जेव अमच्चो, जधा चाणक्कहदअस्स विप्पिअं कदुअ, णत्थि मे पुणो पाडलिउत्ते प्पवेसो त्ति, ता इच्छामि अहं अज्जस्स ज्जेव सुप्पसण्णे पादे [चलणे] सेविदुं (२३)।

राक्ष। भद्र! प्रियं नः, किन्तु त्वदभिप्रायपरिज्ञानेन अन्तरितोऽस्माकम् अनुनयः (ण)। तत् एवं क्रियताम्।

सिद्धा। [सहर्षम्।] अणुग्गहिदोह्मि (२४)।

राक्ष। सखे! शकटदास! विश्रामय सिद्धार्थकम्।

---

(२१) आर्य्य! एष मे परितोषो, यदस्या मुद्राया अमात्यः परिग्रहप्रसादं करोतीति।

(२२) अमात्य! विज्ञापयामि किमपि।

(२३) जानात्येव अमात्यो, यथा चाणक्यहतकस्य विप्रियं कृत्वा नास्ति मे पुनः पाटलिपुत्रे प्रवेश इति। तदिच्छामि अहम् अमात्यस्य एव सुप्रसन्नौ पादौ सेवितुम्।

(२४) अनुगृहीतोऽस्मि।

---

(ण) त्वदभिप्रायपरिज्ञानेन तवाभिप्रायं परिज्ञाय अस्माकम् अनुनयः अन्तरितः तिरोहितः अस्माभिर्भवादृशं मित्रमनुनीय स्वनिकटे रक्षितुं यत्नः कर्त्तव्य आसीत्, स तु भवद्वचनेन एव अनायाससिद्धः संवृत्त इति भावः।

शक। यत् आज्ञापयति अमात्यः। [इति सिद्धार्थकेन सह निष्क्रान्तः।]

राक्ष। सखे! विराधगुप्त! वर्णय इदानीं कुसुमपुरवृत्तान्तशेषम्। अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापं (त) चन्द्रगुप्तप्रकृतयः?

विरा। अमात्य! बाढं क्षमन्ते, ननु यथाप्रधानम् अनुगच्छन्ति एव (थ)।

राक्ष। सखे! किं तत्र कारणम्?

विरा। अमात्य! इदं तत्र कारणं, मलयकेतोः अपक्रमणात् प्रभृति पीड़ितः चन्द्रगुप्तेन चाणक्य इति [कुपितः चन्द्रगुप्तः चाणक्यस्य] चाणक्योऽपि जितकाशितयाऽसहमानः तैः तैः आज्ञाभङ्गैः चन्द्रगुप्तस्य चेतसः पीड़ाम् उपचिनोति, (द) अयमपि मम अनुभवः।

राक्ष। [सहर्षम्।] सखे! विराधगुप्त! तद्गच्छ त्वम् अनेन आहितुण्डिकच्छद्मना पुनः कुसुमपुरमेव। तत्र हि मे सुहृत्

---

(त) अपि क्षमन्ते सहन्ते किम्? अस्मदुपजापम् अस्माभिः कृतं परस्परभेदम्, तत्र न विरक्ता इत्यर्थः।

(थ) बाढमित्यङ्गीकारस्य द्योतकमव्ययम्। क्षमन्ते इत्यत्र प्रागुक्तवाक्यस्थमुपजापमिति पदं कर्मतयान्वेति। न केवलं क्षमन्ते ननु किन्तु तदुपजापमनुगच्छन्ति अनुसरन्त्येव परस्परभेदरूपं तत्कार्य्यमनुभवन्त्येव इत्यर्थः। न केवलं प्रकृतय एव किन्तु प्रधानादयो राजामात्यादयोऽपीत्याह—यथाप्रधानं, प्रधानं राजा चन्द्रगुप्तः तन्मन्त्री चाणक्यश्च तमनतिक्रम्य तौ अपि परस्परभेदं प्राप्तः किं पुनः अपरे राजपुरुषा इत्यर्थः, अनुगच्छन्ति परस्परभेदरूपं कार्य्यमनुसरन्तीत्यर्थः।

(द) पीडितः विरक्तीकृतः। जितकाशितया जितेन विपक्षपराजयेन काशते शोभते इति जितकाशी गर्वितः तस्य भावः तया। उपचिनोति जनयति।

वैतालिकव्यञ्जनः (ध) स्तनकलसो नाम प्रतिवसति । स त्वया मद्वचनात् वाच्यः, यथा चाणक्येन क्रियमाणेषु आज्ञाभङ्गेषु चन्द्रगुप्तः त्वया समुत्तेजनरूपैः श्लोकैः उपश्लोकयितव्य (न) इति । कार्य्यञ्च अतिनिभृतं करभकहस्तेन सन्देष्टव्यम् इति ।

विरा । यत् आज्ञापयति अमात्यः । [ इति निष्क्रान्तः । ]

[ प्रविश्य पुरुषः । ] जेदु जेदु अमच्चो । अमच्च ! सअड़दासो विण्णवेदि, एदे क्खु तिण्णि अलङ्कारविसेसा विक्कीअन्ति, ता पच्चक्खीकरेदु अमच्चो (२५) (प) ।

राक्ष । [ विलोक्य आत्मगतम् । ] अहो ! महार्हाणि आभरणानि [ प्रकाशम् । ] भद्र ! उच्यतां शकटदासः, परितोष्य विक्रेतारं गृह्यतामिति ।

पुरु । जं अमच्चो आणवेदि त्ति (२६) । [ निष्क्रान्तः ।]

राक्ष । [ स्वगतम् । ] यावत् अहमपि कुसुमपुराय करभकं प्रेषयामि । [ उत्थाय । ] अपि नाम दुरात्मनः चाणक्यहतकात् चन्द्रगुप्तो भिद्येत, अथवा सिद्धमेव समीहितं पश्यामि । कुतः ?—

---

(२५) जयति जयति अमात्यः । अमात्य ! शकटदासो विज्ञापयति, एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तत् प्रत्यक्षीकरोतु अमात्य इति ।

(२६) यदमात्य आज्ञापयति इति ।

---

(ध) वैतालिकव्यञ्जनः प्रबोधकरव्यवसायी, यः निद्रितान् भूपतिप्रभृतीन् स्तुतिपाठादिना प्रातः प्रबोधयति ।

(न) उपश्लोकयितव्यः श्लोकेन स्तोतव्य इत्यर्थः ।

(प) एतदलङ्कारविक्रेतारश्च चाणक्यप्रणिधयः ते च चाणक्योपदेशेन अत-

मौर्य्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्त्तते,
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः ।
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं,
सौहार्द्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥ २३ ॥

[ इति निष्क्रान्ताः सर्व्वे । ]

इति द्वितीयोऽङ्कः ।

---

पर्व्वेश्वराङ्गयोजितालङ्कारत्रयं राक्षससमीपे विक्रेतुमागता तत्र क्रीत्वा स्वशरीरे राक्षसेन धृत्वा मलयकेतोः समीपे गमिष्यते तद्दृष्ट्वा चायं दर्शयिष्यताम्: राक्षसेन मलयकेतोर्भेदो भविष्यति तथा लेख्यपत्रं लिखितस्य पत्रस्याप्यन्यतार्थमित्यादिकमागम्य एतदलङ्कारत्रयेण सुसंवादिता भविष्यतीत्यतः राक्षससमीपे तद्विक्रयणमिति द्रष्टव्यम् ।

स्वस्वप्रयोजनमुद्दिश्यैव सर्व्वे इतरानपेक्षन्ते एतौ च चाणक्यचन्द्रगुप्तौ राज्यप्राप्त्या प्रतिज्ञापूरणेन च कृतकृत्याविति न तयोरितरेतरापेक्षास्तीति भेदः सुखेन भवितुमर्हतीत्याह—मौर्य्य इति । मौर्य्यश्चन्द्रगुप्तः सर्वभूतलभुजा सर्व्वेषां राज्ञाम् आज्ञापकः शास्ता सम्राडित्यर्थः, अत एव तेजसि गर्व्वे वर्त्तते । चाणक्योऽपि अयं चन्द्रगुप्तः मदाश्रयात् राजा अभूत् इति जातस्मयः सञ्जातगर्व्वः । अतः लब्धान्तरा प्राप्तावसरा कृतकृत्यता कृतार्थता एव राज्यप्राप्त्या कृतार्थं सिद्धकामम् एकं चन्द्रगुप्तं तीर्णप्रतिज्ञार्णवम् अपरं चाणक्यञ्च सौहार्द्दात् नियतं निश्चितं भेत्स्यति पृथक् कारयिष्यतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

# तृतीयोऽङ्कः।

—○:*:○—

[ ततः प्रविशति कञ्चुकी। ]

कञ्चु।—

रूपादीन् विषयान् निरूप्य करणैः यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे
न्यस्तं मूर्ध्नि पदं तवैव जरया, तृष्णे! मुधा माद्यसि ॥१॥

[ परिक्रम्य आकाशे। ] भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः! सुगृहीतनामा देवः चन्द्रगुप्तो वः समाज्ञापयति। यथा, प्रवृत्तकौमुदीमहोत्सवरमणीयतरं (क) कुसुमपुरम् अवलोकयितुम् इच्छामि, तत् क्रियन्ताम् अस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्य उपरि भूमय इति। तत् किं चिरयन्ति भवन्तः?

---

रूपादीनिति।—हे तृष्णे! त्वया यैः करणैरिन्द्रियैः रूपादीन् विषयान् निरूप्य अवधार्य आत्मलाभः स्ववृत्तिलाभः चरितार्थतेति यावत् लब्धः, सम्प्रति जरया तेषु अपि आत्मलाभोपायेषु चक्षुरादिषु इन्द्रियेषु स्वार्थावबोधक्रियाः स्वस्वविषयज्ञानरूपव्यापाराः हताः नष्टाः, तदानीम् इन्द्रियाणां सम्यग्बोधाक्षमत्वादिति भावः। एवं ज्ञानेन्द्रियाणामपाटवमुक्त्वा तत्प्रत्यासन्नानां कर्मेन्द्रियाणामपि अपाटवमाह—अङ्गानीति। मम आज्ञाविधेयानि पूर्वं वशीभूतानि [अद्याविधेयानि इति पाठे—अद्य अधुना अविधेयानि अवशीभूतानि इति विशेषः।] अङ्गानि प्रसभं बलक्रमेण पटुतां स्वस्वव्यापारसामर्थ्यं त्यजन्ति, अतः तव एव मूर्ध्नि शिरसि जरया पदं न्यस्तं चरणम्, इदानीं त्वं मुधा वृथा माद्यसि वर्धिष्यसे, जरायां दास्यां तिष्ठति परं भोगाद्यक्षमत्वात् सा विफलेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(क) सुगृहीतनामेति।—"स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते" इत्युक्तेः प्रातःस्मरणीयनामेत्यर्थः। प्रवृत्तकौमुदीमहोत्सवरमणीयतरं प्रवृत्तः प्रारब्धः यः कौमुदीमहोत्सवः शारदपौर्णमासीसाध्यमहानन्दजनकव्यापारविशेषः तेन रमणीयतरं समधिकरमणीयम्।

[आकाशे आकर्ण्य] किं ब्रूथ आर्य्याः ! किम् अविदित एवायं देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेध इति ? आः दैवोपहताः ! किम् अनेन वः प्राणहरेण कथोद्घातेन ? (ख) शीघ्रम् इदानीम्,—

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रजः
सम्पूर्णेन्दुमयूखसंहतिरुचां सद्मामराणां श्रियः ।
सिंहाङ्कासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २ ॥

[आकाशे ।] किं कथयन्ति भवन्तः ? एते त्वरामहे इति । भद्राः ! त्वरध्वम् अयमागत एव चन्द्रगुप्तः । य एषः,—

सुविश्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्येणोढा गुरुरपि भुवो यास्य गुरुणा ।

---

(ख) प्राणहरेण इति ।—राजाज्ञाभिमतविपर्य्ययेण तस्य प्राणदण्डफलकत्वात् प्राणहरत्वम् । कथोद्घातेन कथाप्रसङ्गेन ।

आलिङ्गन्तु इति ।—सम्पूर्णेन्दुमयूखसंहतिरुचां पूर्णचन्द्रकिरणसमूहकान्तीनां सद्मामराणां प्रशस्तवालव्यजनानां श्रियः शोभाः पिनद्धस्रजः मात्यवेष्टितान् गृहीतधूपसुरभीन् धृतधूपसौरभान् स्तम्भान् प्रासादस्थितिस्तम्भान् आलिङ्गन्तु आश्रयन्तु । सुचिरं सततं सिंहाङ्कासनधारणात् राजसिंहासनस्य धारणात् अथ च सिंहेन स्वक्रोडरूपासने धारणात् सञ्जातमूर्च्छां बहुभारधारणात् सिंहभयाच्च मूर्च्छितामिव गां भूमिं धेनुञ्च सकुसुमः पुष्पसहितः चन्दनवारिणा सेकः क्षिप्रं शीघ्रम् अनुगृह्णातु, यथा सिंहक्रोडस्थितायाः मूर्च्छितायाः गोः जलादिसेकादाश्वासनं तथा गुरुभारसिंहासनधारणात् श्रान्ता भूमिः चन्दनवारिणा आश्वास्यतामिति भावः । अत्र पूर्व्वार्द्धे प्रस्तुतेषु चामरव्यजनेषु अप्रस्तुतानामन्यासां पूर्णनिशाकररश्मिकरणकान्तिपूर्णानां औपम्यगर्भविशेषणसाम्येन व्यवहारसमारोपणात् समासोक्तिर्व्यज्यते । परार्द्धे सिंहाङ्कासनादि श्लिष्टपदप्रतिभोत्थापिता सञ्जातमूर्च्छामिव इत्यत्र उत्प्रेक्षा । इत्यनयोः संसृष्टिर्गम्यते । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात् स्खलति न च, दुःखं वहति च ॥ ३ ॥

[ नेपथ्ये । इत इतो देवः । ]

[ ततः प्रविशति राजा प्रतीहारी च । ]

राजा । [स्वगतम् । ] राज्यं हि नाम राजधर्मानुवृत्ति-परतन्त्रस्य (ग) भूपतेः महदप्रीतिस्थानम् । यतः,—

परार्थानुष्ठाने जडयति नृपं स्वार्थपरता,
परित्यक्त [क्तान्यार्थो] स्वार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत् स्वार्थादभिमततरो, हन्त परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥ ४ ॥

सुविश्लिष्टैरिति ।—विषमेषु दुर्गमेषु दुरवगमेषु वा अपि पथिषु मार्गेषु राजनीत्यादिषु च अचलता अस्खलता धुर्य्येण भारवहनधर्मेण अस्य चन्द्रगुप्तस्य गुरुणा जनकेन नन्देन सुविश्लिष्टैः सुविश्लिष्टैः सुदृढैश्च अङ्गैः अमात्यादिभिः स्कन्धादिभिश्च भुवः पृथिव्या गुरुरपि या धूः भारश्चिन्ता च चिरम् ऊढा धृता, नवे वयसि मनस्वी प्रशस्तमनाः महानुभावः इत्यर्थः तामेव उच्चैः महतीं धुरं वोढुं व्यवसितः उद्यतः दम्यत्वात् विनेयभावात् न स्खलति न च्यवते दुःखं परिश्रमजनितं वहति च । बहुपरिश्रमवाह्यभारस्य वहने शमावश्यं भाविऽपि अस्य न तत्र खेदः नापि स्खलनमिति भावः । अत सुविश्लिष्टैः अङ्गैः पथिषु विषमेषु इत्यादिश्लिष्टपदन्यास-प्रतिभोत्थापिता, समेन कार्य्येण भारवहनरूपेण प्रस्तुते नवनरेन्द्रे अन्यस्य अप्रस्तुतस्य बालवृषभस्य व्यवहारारोपात् समासोक्तिरित्यवगन्तव्यम् । शिखरिणी वृत्तम् ॥ ३ ॥

(ग) राजधर्मानुवृत्तिपरतन्त्रस्य राजधर्मस्य शास्त्रविहितस्य अनुवृत्तिः अनुसरणं तत्र परतन्त्रः अधीनः तस्य ।

प्रजापालनरूपराजधर्मानुवृत्तौ तदायत्तस्य नृपतेर्न सुखं "सर्वं परवशं दुःखम्" इति मनूक्तिरित्याह—परार्थानुष्ठान इति । परार्थानुष्ठाने परेषां कार्य्यदर्शनादिव्यापारे स्वार्थपरता स्वकार्य्यसाधनप्रवृत्तिः नृपं जडयति, आक्रामति, जडीकरोतीति वा परकार्य्यकरणे अर्थागमदर्शनात् तदायत्तं करोतीत्यर्थः । परित्यक्तस्वार्थः त्यक्तनिजकार्य्यः नियतं निश्चितम् अयथार्थक्षितिपतिः अननुगतनामा पृथिवीपतिः, स्वकार्य्यकरणेन एवास्य क्षितिपतित्वम्

अपिच। दुराराध्या हि राजलक्ष्मीः आत्मवद्भिः अपि (घ) राजभिः। कुतः ?—

तीक्ष्णादुद्विजते, मृदौ परिभवत्रासान्न सन्तिष्ठते,
मूर्खान् द्वेष्टि, न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्य्या भृशम्॥ ५॥

अन्यच्च। कृतककलहं कृत्वा, स्वतन्त्रेण च त्वया कश्चित् कालं व्यवहर्त्तव्यमित्यार्य्योपदेशः, स च कथमपि मया

---

अन्यथा विफलमिति भावः। परार्थः परकार्य्यं स्वार्थात् स्वकार्य्यात् अभिमततरः प्रियतरश्चेत् तर्हि परवान् पराधीनो भवेदिति शेषः, हन्तेति खेदद्योतनार्थमव्ययम्। पराश्रयः पराधीनः पुरुषः कथमिव केन प्रकारेण प्रीतेः सुखस्य रसम् आस्वादं वेत्ति अनुभवति ? रसवेदनयोस्तुल्यार्थत्वं नैकस्य वेदनस्येह कृत्यर्थकता। शिखरिणी वृत्तम्॥ ४॥

(घ) आत्मवद्भिः अपि वशीकृतेन्द्रियैरपि, किं पुनरजितेन्द्रियैः ?

तीक्ष्णादिति।—अहो इति आश्चर्य्यसूचकमव्ययम्। श्रीः लक्ष्मीः लब्धप्रसरा लब्धप्रतिष्ठा आदरिणी इत्यर्थः वेशवनितेव वाराङ्गनेव भृशम् अत्यर्थं दुःखोपचर्य्या दुःखेन उपचर्य्या सेव्या। तथाहि, तीक्ष्णात् उग्रात् जनात् उद्विजते उद्विग्ना कदाचित् मां नाशयेदिति उद्विग्ना भवति, मृदौ शान्तस्वभावे अविक्रान्ते इति यावत् परिभवत्रासात् अन्यकृतावमानभयात् न सन्तिष्ठते, मूर्खान् अज्ञान् अविवेकिन इत्यर्थः द्वेष्टि, अत्यन्तविद्वत्सु अपि प्रणयिताम् अनुरागं न गच्छति, विद्यायामेव तेषामनुरागात् विरागकारणमिति भावः। शूरेभ्यः वीरेभ्यः अपि अधिकं बिभेति, कदा मां शत्रुहस्ते नेष्यतीति सम्भावनयेति भावः। एकान्तभीरून् अतिभयशीलान् उपहसति, भयभीतोऽयं कथं मां रक्षिष्यतीति मत्वा इति भावः। अत्रैकस्याराज्यश्रियः कर्त्तृत्वे नानेक-क्रिया-सम्बन्ध-निबन्धना पादत्रये दीपकालङ्कृता। चतुर्थीपादे उपमानोपमेययोरुभयोः साहश्यलक्ष्मीप्रकाशक इत्युपमाभासकः तथाच मिथोनपेक्षया वर्त्तमानयोरनयोः संसृष्टिरित्यवगन्तव्यम्। शार्दूलविक्रीडितं वृत्तम्॥ ५॥

पातकम् इवाभ्युपगतः (ङ), अथवा शश्वत् आर्य्योपदेशसंस्क्रियमाणमतयः सदा एव अस्वतन्त्रा वयम् । कुतः ?—

इह हि रचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते,
त्यजति तु यदा मार्गं मोहात् तदा गुरुरङ्कुशः।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः,
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः ॥ ६ ॥

[प्रकाशम् ।] आर्य्य ! वैहीनरे ! **सुगाङ्गप्रासादमार्गम् आदेशय ।**

**कञ्चु । इत इतो देवः ।**

**राजा । [परिक्रामति ।]**

**कञ्चु । [परिक्रम्य ।] अयं सुगाङ्गप्रासादः, शनैः आरोढुमर्हति आर्य्यः ।**

**राजा ।** [नाट्येन आरुह्य दिशोऽवलोक्य ।] **अहो ! शरत्समय-संभृतशोभाविभूतीनां दिशाम् अतिरमणीयता ! कुतः ?—**

**शनैः शान्ता भूताः सितजलधरच्छेदपुलिनाः,**
**समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः ।**
**चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदैः**
**नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥ ७ ॥**

---

(ङ) अभ्युपगतः अङ्गीकृतः ।

इहेति ।—इह अस्मिन् जगति साध्वीं क्रियां सत्कार्य्यं रचयन् कुर्वन् शिष्यः न निवार्य्यते गुरुणेति शेषः, यदा तु मोहात् अज्ञानात् मार्गं पन्थानं सदाचाररूपं त्यजति तदा गुरुः अङ्कुशः तस्य गमननिवारकास्त्रविशेषः भवतीति शेषः । तस्मात् शिष्याः विनयरुचयः विनीताः सन्तः साधुशीलाश्च सदा एव निरङ्कुशाः निरोधशून्याः, गुरुस्तान् न निवारयतीत्यर्थः । अतः कारणात् वयं हि नित्यं स्वातन्त्र्येभ्यः, स्वाधीनताभ्यः परतरम् अत्यन्तं यथा तथा पराङ्मुखा भवेम । हरिणी वृत्तं "न समरसला गः षड्वेदैः हयैर्हरिणी मता" इति लक्षणात् ॥ ६ ॥

शनैरिति ।—सितजलधरच्छेदपुलिनाः सितजलधरच्छेदाः जलाभावात् श्वेत-

अपिच,—

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपथं,
दधत्या शालीनामवनतिमुदारे सति फले।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८ ॥

अपिच,—

भर्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथञ्चिदवतार्य्य तनूभवन्तीम्।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ९ ॥

---

मेघखण्डाः पुलिनानीव यासां ताः शनैः क्रमेण वर्षापगमात् शान्ताः निर्मला भूताः जाताः, कलविरुतिभिः मधुराव्यक्तनिनादैः सारसकुलैः [ दिक्सरितोरुभयत्र समावेशसम्भवेन नोपमानान्तरापेक्षा ] समन्तात् चतुर्दिक्षु आकीर्णा व्याप्ताः। निशि रजन्यां चित्राकारैः विचित्ररूपैः विकचानि प्रफुल्लानि नक्षत्राणि कुमुदानीव तैः चिताः व्याप्ताः दीर्घाः मेघावरणराहित्यात् तथा प्रतीयमाना इत्यर्थः दश दिशः सरित इव नभसः आकाशात् स्यन्दन्ते निःसरन्ति प्रादुर्भवन्ति प्रकाशन्ते इति यावत्। शिखरिणी वृत्तम् ॥ ७ ॥

अपामिति।—उद्वृत्तानां प्रहृद्धानाम् उद्धतानामिति ध्वनिः अपां [illegible] निजं स्वाभाविकं स्थितिपथं स्वस्थानस्थितिमार्गं मर्य्यादाञ्च स्वाभाविकस्थानमिति ध्वनिः उपदिशन्त्या नियोजयन्त्या, उदारे महति फले शस्ये विद्यादौ च सति शालीनां धान्यानाम् अवनतिं नम्रतां विनीतताञ्च दधत्या जनयन्त्या, उग्रं तीक्ष्णं विषमिव मयूराणां मदं गर्वं हरन्त्या शरदा कृत्स्नस्य समग्रस्य लोकस्य जगतः अयं विनय इव कृतः, अहो इति आश्चर्य्यद्योतकमव्ययम्। अचेतनानामपि जलानाम् अल्पचेतनानामपि शालीनां, मयूराणाञ्च तत्तद्दोषापकरणात् सर्वेषामेव विनयः शरदा कालेन कृत इवेत्युत्प्रेक्षा। शिखरिणी वृत्तम् ॥ ८ ॥

भर्तुरिति।—शरत् रतिकथायां चतुरा दूतीव बहुवल्लभस्य बहुनदीस्वामित्वात् अनेककान्तस्य भर्तुः चरित्रदोषादिति शेषः कलुषिताम् आविलाम् अप्रसन्नाम् ईर्ष्यान्वितामित्यर्थः, तथा तनूभवन्तीं वर्षाऽवसानेन दुःखेन च अतितन्वीं कृशाङ्गीञ्च गङ्गां

[समन्तात् नाट्येन अवलोक्य।] अये! कथम् अप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरं पश्यामि? आर्य्य! वैहीनरे! अथ (च) त्वया अस्मद्वचनात् आघोषितः कुसुमपुरे कौमुदीमहोत्सवः?

कञ्चु। देव! अथ किम्? आघोषितो देवस्य आज्ञया कुसुमपुरे कौमुदीमहोत्सवः।

राजा। आर्य्य! तदेवं किं न परिगृहीतम् अस्मद्वचनं पौरजनेन?

कञ्चु। [कर्णौ पिधाय।] देव! शान्तं पापं, शान्तं पापं, पृथिव्याम् अस्खलितपूर्वं देवस्य शासनं, कथं पौरेषु स्खलितुम् अर्हति?

राजा। आर्य्य! वैहीनरे! तत् कथम् अप्रवृत्तकौमुदीमहोत्सवम् अधुनापि कुसुमपुरं पश्यामि? पश्य,—

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्वेशनार्य्यो
नालंकुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः।
अन्योन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः॥१०॥

---

(नारीवेति ध्वनिः) मार्गे स्वखातप्रदेशे मर्य्यादायाञ्च कथञ्चित् कष्टेन सर्वात्मना सर्वप्रकारेण नन्दप्रबोधवाक्यैरित्यर्थः अवतार्य्य स्थापयित्वा प्रसन्नां कृत्वा सिन्धुपतिं सिन्धुं समुद्रं पतिमिव समुद्रतुल्यगम्भीरं पतिं वा नयति आभिमुख्येन प्रापयति अनुकूलयति वा। वसन्ततिलकं वृत्तम्॥ ९॥

(च) अथेति प्रश्नाद्यव्ययं किमित्यर्थः।

धूर्त्तैरिति।—वेशनार्य्यः वारविलासिन्यः स्फुटचतुरकथाकोविदैः सुव्यक्तचातुर्य्यप्रसङ्गपण्डितैः धूर्त्तैः लम्पटैः अन्वीयमानाः अनुगम्यमानाः सत्यः पृथुजघनभराक्रान्तिमन्दैः विशालजघनभरालसैः प्रयातैः गतिभिः रथ्याः राजमार्गान् न अलङ्कुर्वन्ति शोभयन्ति। किञ्चेति चार्थः, पौरमुख्याः पुरवासिनां प्रधानाः स्वामिनः गृहस्वामिनः गृहविभवैः गृहैश्वर्य्यैः अन्योऽन्यं परस्परं स्पर्द्धमानाः मुक्तशङ्काः निर्भी-

कञ्चु। देव! एवमेतत्। (ञ)

राजा। किमेतत्? (ज)

कञ्चु। देव! अत इदम्—"। (झ)

राजा। आर्य्य! स्फुटमभिधीयताम्।

कञ्चु। देव! प्रतिषिद्धः कौमुदीमहोत्सवः।

राजा। [सक्रोधम्।] आर्य्य! आः, केन?

कञ्चु। न अतः परम् अस्माभिर्देवो विज्ञापयितुं शक्यते।

राजा। न खलु आर्य्येण चाणक्येन अपहृतः प्रेक्षकाणाम् (ञ) अतिशयरमणीयः चक्षुषो विषयः?

कञ्चु। देव! कोऽन्यो जीवितुकामो देवस्य शासनम् उल्लङ्घयिष्यति?

राजा। शोणोत्तरे! उपविष्टुम् इच्छामि।

प्रती। देव! एदं सिंहासणं, उपविसदु देवो (१)।

राजा। [नाट्येन उपविश्य।] आर्य्य! वैहीनरे! आर्य्यचाणक्यं द्रष्टुम् इच्छामि।

कञ्चु। यत् आज्ञापयति देवः। [इति निष्क्रान्तः।]

---

(१) देव! एतत् सिंहासनम्। उपविशतु देवः।

---

काश्च सन्तः स्त्रीभिः साकं सह अभिलषितं वाञ्छितं पार्वणं विधिं पर्वसमयोचितं महोत्सवं न भजन्ते न सेवन्ते। स्रग्धरा वृत्तम्॥ १०॥

(छ) एतत् कौमुदीमहोत्सवानुष्ठानं यथावर्णितं महाराजेन तत् एवमेव तथैव।

(ज) एतत् कौमुदीमहोत्सवानुष्ठानं किम्? कस्मात्? किं हेतुकमित्यर्थः।

(झ) अतः वक्ष्यमाणात् चाणक्येन प्रतिषेधरूपात् हेतोरिदम् तदनुष्ठानम्।

(ञ) अपहृतः प्रतिषिद्धः, प्रेक्षकाणां दर्शकानाम्।

[ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयन् चाणक्यः ।]

चाण । [आत्मगतम् ।] कथं स्पर्द्धते मया सह दुरात्मा राक्षसहतकः ? कुतः ?—

कृतागाः कौटिल्यो भुजग इव निर्याय नगरात्
यथा नन्दं हत्वा नृपतिमकरोत् मौर्य्यवृषलम् ।
तथाहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेष व्यवसितः ॥ ११ ॥

[प्रत्यक्षवत् आकाशे लक्ष्यं बद्धा ।] राक्षस ! राक्षस ! विरम्यताम् अस्माद् दुर्व्यवसितात् (ट) ।

उत्सिक्तः कुसचिवदृष्टराज्यतन्त्रो
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।
चाणक्यस्त्वमपि च नैव केवलं ते
साधर्म्यं मदनुकृतेः प्रधानवैरम् ॥ १२ ॥

[विचिन्त्य ।] अथवा, न अतिमात्रम् अस्मिन् वस्तुनि मया मनः खेदयितव्यम् । कुतः ?—

कृतागा इति ।—भुजग इव कृतागाः कृतम् आगः अग्रासनान्निष्कासनरूपः अपराधः यस्य सः कौटिल्यः नगरात् निर्याय निर्गत्य नन्दं हत्वा यथा मौर्य्यवृषलं चन्द्रगुप्तं नृपतिम् अकरोत्, तथा अहं मौर्य्येन्दोः चन्द्रगुप्तस्य श्रियम् अपहरामि इति कृतधीः कृतबुद्धिः एषः मद्बुद्धेः प्रभावम् अतिशयितुम् अतिक्रमितुं व्यवसितः प्रवृत्तः । शिखरिणी वृत्तम् ॥ ११ ॥

(ट) दुर्व्यवसितात् दुश्चेष्टितात् असाध्यव्यापारादित्यर्थः ।

चन्द्रगुप्तश्रीहरणस्य दुःसाध्यत्वं दर्शयितुं नन्दस्य सुसाध्यत्वे कारणं दर्शयन्नाह—उत्सिक्त इति ।—उत्सिक्तः गर्वितः कुसचिवदृष्टराज्यतन्त्रः कुमन्त्रिदृष्टराज्यभारः असौ नन्दः एष चन्द्रगुप्तः न भवति, अयन्तु सुसचिवदृष्टराज्यतन्त्रोऽगर्वितश्च इत्यर्थः । त्वमपि चाणक्यः नैव, चाणक्य इत्यात्मनामकथनेन आत्मनो महामहिमत्वं सूचितम् । प्रधानवैरं महावैरिभावः केवलं ते तव मदनुकृतेः मदनुकरणस्य साधर्म्यं सादृश्यम् । प्रहर्षिणी वृत्तं "त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥ १२ ॥

मद्भृत्यैः किल नाम पर्वतसुतो व्याप्तः प्रतिष्ठान्तरैः
उद्युक्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः ।
कृत्वा सम्प्रति कैतवेन कलहं मौर्य्येन्दुना, राक्षसं
भेत्स्यामि स्वमतेन, भेदकुशलो ह्येष प्रतीपं द्विषः ॥ १३ ॥

[ प्रविश्य कञ्चुकी । ]-कष्टा खलु सेवा नाम ! कुतः ?—

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभात्
अन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायास्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥१४॥

[ परिक्रम्य अवलोक्य च । ] इदम् आर्य्यचाणक्यस्य गृहं,

---

मद्भृत्यैरिति ।—मद्भृत्यैः मम भृत्यैः प्रतिष्ठान्तरैः विपक्षसमीपे लब्धप्रतिष्ठैः प्रतिष्ठा यथार्थख्यातिः अन्तरा अन्तर्हिता येषां तैः गुप्तवेशैः इति वा भागुरायणादिभिः पर्वतसुतो मलयकेतुः व्याप्तः परिवृतः वशीकृत इत्यर्थः, किलेति निश्चयार्थमव्ययं, नाम सम्भावनायामव्ययम् । सिद्धार्थकाद्याः स्पशाः चराः "अपसर्पश्चरः स्पशः" इत्यमरः । नियोगसाधनविधौ मदाज्ञापालनरूपे विधाने उद्युक्ताः प्रवृत्ताः । उपदिष्ट-कार्य्यश्च मलयकेतोः राक्षसस्य भेदनं तस्योपरिष्टाद् व्यक्तीभविष्यति । सम्प्रति भेद-कुशलः अहं कैतवेन छलेन मौर्य्येन्दुना चन्द्रगुप्तेन कलहं कृत्वा स्वमतेन हि स्वबुद्ध्यैव प्रतीपं प्रतिकूलं राक्षसं द्विषः शत्रोः मलयकेतोः भेत्स्यामि पृथक् करिष्यामि । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

राज-राजसचिवादीनां भयोत्पादकत्वेन सेवाधर्म्मं कुक्कुरवृत्तितुल्यतया निन्दति—भेतव्यमिति ।—प्रथमं नृपतेः, ततः सचिवतः प्रधानमन्त्रिणः, ततः राज्ञः वल्लभात् प्रिय-जनात्, ततः अस्य राज्ञः भवने लब्धप्रसादाः प्राप्तानुग्रहाः ये विटाः धूर्त्ताः वसन्ति वर्त्तन्ते, तेभ्योऽपि भेतव्यं शङ्कितव्यम् । अतः कृतधियः शिक्षितबुद्धयः पण्डिताः दैन्यात् (दारिद्र्यात्) दीनभावात् नीचप्रकृतिकत्वात् पिण्डार्थम् अन्नार्थम् उन्मुखदर्शनापलपनैः उन्मु-खानि ऊर्द्धमुखानि दर्शनानि अपलपनानि चाकूलयश्च तानि तैः आयास्यतः प्रयतमानस्य जनस्य लाघवकारिणीं नीचत्वविधायिनीं सेवां श्ववृत्तिं कुक्कुरजीविकां विदुः जानन्ति स्थाने युक्तमेव । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

यावत् प्रविशामि। [ नाट्येन प्रविश्य अवलोक्य च। ] अहो राजाधिराजमन्त्रिणो गृहभूतिः (ठ)! कुतः?—

उपलशकलमेतद् भेदकं गोमयानां
वटुभिरुपहृतानां बर्हिषां स्तोम एषः।
शरणमपि समिद्भिः शुष्यमाणाभिराभिः
विनमितपटलान्तं दृश्यते जीर्णकुड्यम्॥ १५॥

ततः स्थाने खलु अस्य वृषलो देवश्चन्द्रगुप्त इति। कुतः?—

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः,
प्रवाचः कार्पण्याद् यदवितथवाचोऽपि कृतिनः।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा,
निरीहाणामीशस्तृणमिव तिरस्कारविषयः॥ १६॥

---

(ठ) गृहभूतिः गृहैश्वर्य्यम्, सोपहासोक्तिरियं, राजाधिराजमन्त्रिणो वक्ष्यमाणगृह-संस्थानानौचित्यात्।

उपलशकलमिति।—एतत् उपलशकलं प्रस्तरखण्डं गोमयानां करीषाणां शुष्काणामिति शेषः भेदकम्, एषः वटुभिः ब्राह्मणबालकैः शिष्यभूतैरित्यर्थः उपहृतानाम् आनीतानां बर्हिषां दर्भाणां स्तोमः संहतिः। शरणं गृहमपि आभिः शुष्यमाणाभिः समिद्भिः विनमितपटलान्तम् अतिनमितच्छदिप्रान्तं जीर्णकुड्यं दृश्यते। मालिनी वृत्तं "ननमय-ययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ १५॥

राजसेवनं तृणाद्धेतुकमिव तृष्णयैव हि राज्ञोऽसतो गुणस्य कीर्त्तनाय प्रवर्त्तन्ते इति दर्शयन् सेवाधर्म्मं निन्दति—स्तुवन्तीति।—प्रवाचः मिष्टभाषिणः अवितथवाचः सत्यवाक्-रताः कृतिनः साधवः अपि कार्पण्यात् दैन्यात् अश्रान्तास्याः अमरहितमुखाः सन्तः निरन्तरं प्रवक्तारः इत्यर्थः अभूतैरपि अविद्यमानैरपि गुणैः क्षितिपतिं प्रभुं स्तुवन्ति इति यत् स खलु तृष्णायाः धनाशायाः सकलः सम्पूर्णः प्रभावः महिमा स्यात्, इतरथा अन्यथा धनाशाविरहे इत्यर्थः निरीहाणां निश्चेष्टानां निस्पृहाणामित्यर्थः ईशः प्रभुः धनी इति यावत्। तृणमिव तिरस्कारविषयः अनादरणीय इत्यर्थः। शिखरिणी वृत्तम्॥ १६॥

[ विलोक्य सभयम् । ] तत् अयम् आर्य्यचाणक्यस्तिष्ठति ।—

यो नन्दमौर्य्यनृपयोः परिभूय लोकम्
अस्तोदयौ प्रतिदिशन्नविभिन्नकालम् ।
पर्य्यायपातितहिमोष्णिम सर्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः ॥ १७ ॥

[ जानुभ्यां भूमौ निपत्य । ] जयति जयति आर्य्यः ।

चाण । [ नाट्येन अवलोक्य । ] वैहीनरे ! किम् आगमनप्रयोजनम् ?

कञ्चु । आर्य्य ! प्रणतिसम्भ्रमसमुच्चलितभूमिपालमौलिमणिशकलशिखापिशङ्गीकृतपादपद्मयुगलः, पादपद्मयोः आर्य्यं प्रणिपत्य देवः चन्द्रगुप्तो विज्ञापयति, क्रियान्तरम् अन्तरायं अन्तरेण आर्य्यं (ङ) द्रष्टुम् इच्छामि इति ।

चाण । वृषलो मां द्रष्टुम् इच्छति । वैहीनरे ! न खलु वृषलस्य श्रवणमुपयातोऽयं मया कृतः कौमुदीमहोत्सवप्रतिषेधः ?

कञ्चु । आर्य्य ! अथ किम् ?

चाण । [ सक्रोधम् । ] आः ! केन कथितम् ?

---

य इति ।—यः चाणक्यः लोकं राजसैन्यं भुवनञ्च परिभूय पराजित्य सन्ताप्य च नन्दमौर्य्यनृपयोः अविभिन्नकालं समकालम् अस्तोदयौ नाशवृद्धी अदर्शनदर्शने च प्रतिदिशन् कुर्वन् धाम्ना तेजसा पर्य्यायपातितहिमोष्णिम पर्य्यायेण क्रमेण न तु समकालमित्यर्थः पातितं दत्तं हिमम् उष्णिमा उष्णत्वञ्च येन तथोक्तं सत् सर्वगामि सहस्रधाम्नः सूर्य्यस्य धाम तेजः अतिशाययति अतिशय्य वर्त्तते । एकदास्तोदयकरणात् रवितोऽस्याधिक्यात् अत्र व्यतिरेकालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १७ ॥

(ङ) क्रियान्तरं क्रियाविशेषं कार्य्यान्तरम् । अन्तरायं विघ्नम्, अन्तरेण विना, यदि कार्य्यविघ्नो न स्यात् तदित्यर्थः ।

कञ्चु। [भयं नाटयित्वा।] प्रसीदतु आर्य्यः। स्वयमेव सुगाङ्गप्रासादशिखरगतेन देवेन अवलोकितम् अप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्।

चाण। आः शठ, तिष्ठ तावत्, भवद्भिः एव मदन्तरेण प्रोत्साह्य (ठ) कोपितो वृषलः, किम् अन्यत्?

कञ्चु। [सभयं तूष्णीम् अधोमुखस्तिष्ठति।]

चाण। अहो! राजपरिजनस्य चाणक्यस्य उपरि विद्वेषपक्षपातः। अथ क्व वृषलः तिष्ठति?

कञ्चु। [भयं नाटयन्।] आर्य्य! सुगाङ्गप्रासादगतेन देवेन अहम् आर्य्यपादमूलं प्रेषितः।

चाण। [उत्थाय।] कञ्चुकिन्! सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इत इत आर्य्य इति। [उभौ परिक्रामतः।]

कञ्चु। अयं सुगाङ्गप्रासादः, शनैः आरोढुमर्हति आर्य्यः।

चाण। [नाट्येन आरुह्य अवलोक्य च सहर्षम् आत्मगतम्।] अये! सिंहासनमध्यास्ते वृषलः। साधु, साधु।—

नन्दैर्वियुक्तमनपेक्षितराजवृत्तै-
रध्यासितञ्च वृषलेन वृषेण राज्ञाम्।
सिंहासनं सदृशपार्थिवसङ्गतञ्च,
प्रीतिं परां प्रगुणयन्ति गुणा ममैते॥ १८॥

[उपसृत्य]। विजयतां वृषलः।

---

(ठ) मदन्तरेण मां विना मम कलङ्कं प्राप्य इत्यर्थः। प्रोत्साह्य मिथ्यावचनैः उद्दीप्य इत्यर्थः।

नन्दैरिति।—सिंहासनम् अनपेक्षितराजवृत्तैः अदृष्टराजधर्मकार्यैः नन्दैः वियुक्तं विरहितं राज्ञां वृषेण श्रेष्ठेन वृषलेन अध्यासितं सदृशपार्थिवसङ्गतञ्च एते गुणाः [illegible] मम परां प्रीतिं प्रगुणयन्ति जनयन्ति। [illegible]

राजा । [ सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा । ] आर्य्य ! चन्द्रगुप्तः प्रणमति ।

चाण । [ पाणौ गृहीत्वा । ] उत्तिष्ठोत्तिष्ठ वत्स !—

आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीतात्
आ तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य ।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ १८ ॥

राजा । आर्य्यप्रसादात् अनुभूयत एवैतत्, नाशास्यते । उपविशतु आर्य्य । [ इति उभौ यथासनम् उपविष्टौ । ]

चाण । वृषल ! किमर्थं वयम् आहूताः ?

राजा । आर्य्यस्य दर्शनेन आत्मानम् अनुग्रहीतुम् ।

चाण । [स्मितं कृत्वा ।] वृषल ! अलम् अनेन प्रश्रयेण न निष्प्रयोजनम् अधिकारवन्तः प्रभुभिः आहूयन्ते । (क) तत् प्रयोजनम् अभिधीयताम् ।

---

आ शैलेन्द्रादिति ।—शिलान्तस्खलितसुरधुनीशीकरासारशीतात् शिलान्तात् प्रस्तरप्रान्तभागात् स्खलितायाः पतितायाः सुरधुन्याः गङ्गायाः शीकरा एव आसाराः धारासम्पाताः तैः शीतात् [illegible] गङ्गाजल[illegible] आ शैलेन्द्रात् आ हिमालयात् नैकरागस्फुरितमणिरुचः अनेकविधभासमानमणिकान्तियुतात् दक्षिणस्य अर्णवस्य समुद्रस्य आ तीरात् आ कूलात् आगत्य आगत्य भीतिप्रणतनृपशतैः भीत्या प्रणतानां नृपाणां शतैः शश्वदेव सततमेव तव चरणयुगस्य पादद्वयस्य अङ्गुलीरन्ध्रभागाः अङ्गुलिच्छिद्रप्रदेशाः चूडारत्नांशुगर्भाः मुकुटमणिकिरणोदराः क्रियन्ताम् इत्याशीः । स्रग्धरा वृत्तम् ॥ १८ ॥

( क ) [illegible]

राजा। आर्य्य! कौमुदीमहोत्सवप्रतिषेधस्य किं फलम् आर्य्यः पश्यति?

चाण। [स्मितं कृत्वा।] वृषल! उपालब्धु (त) तर्हि वयम् आहूताः?

राजा। आर्य्य! न उपालब्धुम्।

चाण। किं तर्हि?

राजा। विज्ञापयितुम्।

चाण। वृषल! यदि एवं तर्हि विज्ञापनीयानाम् अवश्य शिष्येण रुचयोऽनुरोद्धव्याः (थ)।

राजा। आर्य्य! कः सन्देहः? किन्तु न कदाचिदपि आर्य्यस्य निष्प्रयोजना रुचिः प्रवर्त्तिष्यते इति अस्ति नः प्रश्नावकाशः।

चाण। वृषल! सम्यग्गृहीतवानसि मदाशयम्। न हि प्रयोजनम् अनपेक्षमाणः स्वप्नेऽपि चाणक्यो रुचिं प्रवर्त्तयिष्यति।

राजा। आर्य्य! अत एव मां प्रयोजनशुश्रूषा मुखरयति(द)।

चाण। वृषल! श्रूयताम्, इह खलु अर्थशास्त्रकाराः त्रिविधसिद्धिम् उपवर्णयन्ति। तद्यथा, राजायत्तां, सचिवायत्ताम्, उभयायत्ताञ्च इति। तत् सचिवायत्तसिद्धेर्भवतः किं फलान्वेषणेन वाङ्मनसयोः खेदम् उत्पादयितुं, यतो वयमेव अत्र नियुक्ता वेत्स्यामः।

राजा। [सकोप इव (ध) मुखं परिवर्त्तयति।]

---

(त) उपालब्धु' तिरस्कर्तुम्।

(थ) रुचयः अभिप्रायाः। अनुरोद्धव्याः अनुवर्त्तनीयाः प्रतिपाल्याः इत्यर्थः।

(द) मुखरयति वाचालयति कथनाय प्रवर्त्तयति इत्यर्थः।

(ध) चाणक्यस्यैवोपदेशेन [illegible] कर्त्तव्यतया [illegible] [illegible] [illegible] — सकोप इवेति [illegible]।

द्वितीयः,—

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतोः
जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपाः
नाज्ञाभङ्गं सहन्ते नृवर ! नृपतयस्त्वादृशाः सार्वभौमाः ॥२२॥

अपिच,—

भूषणाद्युप [भोगेन] चारेण प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ २३ ॥

चाण । [ आकर्ण्य आत्मगतम् । ] प्रथमं तावद्विशिष्टदेवता-रूपेण प्रशस्तपरगुणप्रख्यापनम् इदम् आशीर्वचनम् ; इदम्

---

फणाचक्रवालं फणामण्डलम् उपधानं यस्य तादृशं नागाङ्गम् अनन्तक्रोडरूपं शयनं शय्यां मोक्तुं त्यक्तुमिच्छोः हरेः नारायणस्य निद्राच्छेदेन भ्रमिताभ्यां अतिरक्तवर्णा आलेकरा ईषत्सङ्कुचिता दृष्टिः वः युष्मान् अवतु रक्षतु । तादृशदृष्टिकालत्वात् शरदि तत्त्वारोपः इति द्रष्टव्यम् । स्रग्धरा वृत्तम् ॥ २२ ॥

इदानीं राक्षसोपदेशात् चाणक्यचन्द्रगुप्तयोर्भेदं जनयिष्यन् आज्ञाभङ्गस्य प्रभोरसह्यत्वं दर्शयन्नाह—सत्त्वोत्कर्षस्येति । हे नृवर ! नरनाथ ! स्वेन धाम्ना तेजसा मदसलिलमुचां मदस्राविणां गर्वितानाञ्च नागयूथेश्वराणां हस्तियूथपतीनां तत्तद्भूपानाञ्च जेतारः जयिनः कस्यापि हेतोः कस्मैचिदपि प्रयोजनाय, ("षष्ठी हेतुप्रयोगे" इति षष्ठी ।) धात्रा विधिना सत्त्वोत्कर्षस्य शौर्यातिशयस्य निधयः आधारा इव कृताः सृष्टाः, व्यक्तमानावलेपाः व्यक्तः प्रकटः मानावलेपः स्वमानजनितगर्वः येषां तादृशाः, त्वादृशाः भवादृशाः सार्वभौमाः सर्वभूमीश्वराः सम्राजः इत्यर्थः नृपतयः नरेन्द्राः मृगाणाम् अधिपतयः सिंहाः दंष्ट्राभङ्गं दन्तोत्पाटनं इव आज्ञाभङ्गम् आदेशव्याघातं न सहन्ते । उपमालङ्कारोऽयम् । स्रग्धरा वृत्तम् ॥ २२ ॥

इदानीं भवादृशस्य प्रभुत्वं दृढयन्नाह—भूषणाद्युपचारेणेति । भूषणाद्युपचारेण अलङ्कारादिरूपभोग्यवस्तूपभोगेन प्रभुः प्रभुत्वं प्रभुशब्दवाच्यः न भवति । किं तर्हीत्याह,— परैः अन्यैः अपरिभूताज्ञः अलङ्घिताज्ञः अभग्नादेशः त्वमिव अपरोऽपि प्रभुः प्रभव इति अमरात् आज्ञैवास्तीति प्रभुः उच्यते कथ्यते । अनुष्टुप्छन्दः ॥ २३ ॥

राजा। प्रथमं तावत् ममाज्ञा विधानम् [आज्ञाघातः] (अ)।

चाण। वृषल! ममापि खलु त्वदाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति। कुतः?—

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनानाम्
आ पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम्।
मालेवाज्ञा सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति, विनयालङ्कृतं ते प्रभुत्वम् ॥२४॥

राजा। अथ अपरमपि प्रयोजनं यत् तच्छ्रोतुम् इच्छामि।

चाण। तदपि कथयामि?

राजा। कथ्यताम्।

चाण। शोणोत्तरे! शोणोत्तरे! मद्वचनात् कायस्थम् अचलदत्तं ब्रूहि, यत् भद्रभटप्रभृतीनां लेख्यपत्रं तत् तावत् दीयताम् इति।

प्रती। जं अज्जो आणवेदि त्ति। [निष्क्रम्य पुनः प्रविश्य।] अज्ज! एदं पत्तं (२)।

---

(२) यदार्य्य आज्ञापयति इति। आर्य्य! इदं पत्रम्।

---

(अ) आज्ञाविधानम् आज्ञापालनम्। आज्ञाव्याघात इति पाठे—आज्ञाया अव्याघातः आदेशप्रतिपालनमिति स एवार्थः।

अम्भोधीनामिति।—तमालप्रभवकिसलयश्यामवेलावनानां तमालप्रभवपल्लवेन श्यामानि वेलावनानि तीरवनानि येषां तथोक्तानां चटुलतिमिकुल-क्षोभितान्तर्जलानां चटुलानाम् इतस्ततः सञ्चरतां तिमीनां मत्स्यविशेषाणां कुलैः समूहैः क्षोभितं विलोडितम् अन्तर्जलं येषां तादृशानां चतुर्णाम् अम्भोधीनां समुद्राणाम् आ पारेभ्यः आमर्यादिति शेषः (कुतो भवाभिव्याप्तिवत् अपेक्षितक्रियापादानतया पञ्चमी। अथवा आङ्योगे पञ्चमी मर्यादायाम्, तदन्तं स्पष्टार्थः।) नतनृपतिशतैः नतानां नृपतीनां शतैः शिरोभिः सपुष्पा मालेव या तव आज्ञा उह्यते सा मयि एव न अभ्यर्थितार्थः स्खलन्ती प्रतिघात-मापद्यमाना सती ते तव विनयालङ्कृतं प्रभुत्वं प्रथयति विज्ञापयति। स्रग्धरा छन्दः॥२४॥

चाण। [गृहीत्वा।] वृषल! श्रूयताम्।

राजा। दत्तावधानोऽस्मि।

चाण। [वाचयति।] स्वस्ति (म) सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणाम् इतोऽपक्रम्य मलयकेतुम् आश्रितानां परिमाणलेख्यपत्रम् (य)। तत्र प्रथमं, तावत् गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य (र) चन्द्रभानोर्भागिनेयो हिङ्गुरातः, देवस्य स्वजनगन्धी (ल) महाराजो बलगुप्तः, देवस्यैव कुमारसेवको (व) राजसेनः, सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, मालवराजपुत्रो रोहिताक्षः क्षत्रगणमुख्यतमो विजयवर्मा इति। [आत्मगतम्।] एते वयं देवस्य कार्य्ये अवहिताः स्म इति। [प्रकाशम्।] एतावत् एतत् पत्रम्।

राजा। आर्य्य! एतेषाम् अपरागहेतून् (श) श्रोतुम् इच्छामि।

चाण। वृषल! श्रूयताम्, अत्र यौ एतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ एतौ खलु स्त्रीमद्यमृगया-[सक्तौ] शीलौ हस्त्यश्वावेक्षणे हि अनभियुक्तौ इति स्वाधि-

---

(म) स्वस्तीति प्रथमं मङ्गलसूचनार्थम्।

(य) परिमाणलेख्यपत्रं संख्यापत्रमिति यावत्।

(र) महाप्रतीहारस्य प्रधानदौवारिकस्य।

(ल) स्वजनगन्धी स्वजनः आत्मीयजनः तस्य गन्धो विद्यते यस्येति स्वजनसम्बन्धीत्यर्थः।

(व) कुमारसेवकः कुमारे शैशवे सेवकः अथवा आकुमारसेवकः।

(श) अपरागहेतून् विरागकारणानि।

काराभ्याम् अवरोप्य (घ) मया स्वजीवनमात्रेणैव स्थापितौ इति अपरक्तौ, गत्वा स्वेन स्वेन च अधिकारेण व्यवस्थाप्य मलयकेतुम् आश्रितौ (ङ)। यौ एतौ हिङ्गुरातबलगुप्तौ तौ अपि अत्यन्तलुब्धप्रकृती, [लोभासक्तौ] दत्तं धनम् अबहुमन्यमानौ, (छ) तत्र बहु लभ्यत इति मलयकेतुम् आश्रितौ। योऽपि असौ भवतः कुमारसेवको राजसेनः सोऽपि तव प्रसादात् अतिमात्रं कोषहस्त्यश्वं सहसा एव सुमहदैश्वर्य्यम् अवाप्य पुनरुच्छेदशङ्कया अपक्रम्य मलयकेतुम् आश्रितः। योऽयमपरः सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, असौ अपि तत्र काले पर्वतकेन सह समुत्पन्नसौहार्दः तत्प्रीत्या च "पिता ते चाणक्येन घातितः" इति रहसि त्रासयित्वा, मलयकेतुम् अपवाहितवान् (च)। ततो भवदपथ्यकारिषु (क) चन्दनदासप्र[मुखे]भृति-षु निगृह्यमाणेषु स्वदोषाशङ्कया अपक्रम्य मलयकेतुमाश्रितः, तेनापि असौ मम अनेन प्राणाः परिरक्षिता इति कृतज्ञताम् अनु[वर्त्त] रुध्यमानेन पैतृकञ्च परिचयम् आत्मनोऽनन्तरम् अमात्यपदं ग्राहितः (ख)।

---

(घ) अवरोप्य प्रच्याव्य भ्रंशयित्वा इत्यर्थः।

(ङ) स्वेन स्वेनाधिकारेण गजाध्यक्षतारूपेण अश्वाध्यक्षतारूपेण च व्यवस्थाप्य व्यवस्थां कृत्वा आत्मानमिति शेषः, मलयकेतुमाश्रितौ तमाश्रित्य गजाध्यक्षोऽश्वाध्यक्षश्च बभूवेत्यर्थः।

(छ) दत्तं पूर्व्वं निरूपितम्। नन्दनरपतिजये सति युवाभ्यामेतद् दास्यामि इति यत् प्राक् अङ्गीकृतम् इति भावः। अबहु मन्यमानौ अधिकधनलाभेच्छया अपरितुष्यन्तौ।

(च) अपवाहितवान् अपसारितवान्।

(क) भवदपथ्यकारिषु भवदनिष्टकारिषु।

(ख) मलयकेतुनापि कृतस्य आत्मप्राणरक्षारूपोपकारस्याभिज्ञतां प्रत्युपकारिता पैतृकं पितृतः आगतं परिचयं सुहृद्भावरूपं चिरानुगुणञ्च अनुरुध्यमानेन (अनुवर्त्तमानेन)

यौ तौ रोहिताक्षविजयवर्म्माणौ, तौ अत्यन्तमानित्वात् स्वदायादेभ्यः त्वया दीयमानं बहुसम्मानम् असहमानौ, मलयकेतुम् आश्रितौ। इत्येषाम् अपरागहेतवः।

राजा। आर्य्य ! एवम् एतेषु परिज्ञातापरागहेतुषु अपि क्षिप्रमेव कस्मात् न प्रतिविहितम् आर्य्येण ?

चाण। वृषल ! न पारितं प्रतिविधातुम्।

राजा। किम् अकौशलात्, उत प्रयोजनापेक्षितया ?

चाण। कथम् अकौशलं भविष्यति, नियतं प्रयोजनापेक्षितया।

राजा। तत् अप्रतिविधानप्रयोजनम् इदानीं श्रोतुमिच्छामि।

चाण। वृषल ! श्रूयताम् अवधार्य्यताञ्च।

राजा। उभयमपि क्रियते. कथ्यताम्।

चाण। वृषल ! इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानम्। तद्यथा, अनुग्रहो निग्रहश्च इति। अनुग्रहः तावत् आक्षिप्ताधिकारयोः भद्रभटपुरुषदत्तयोः पुनः अधिकारारोपणम् एव। अधिकारश्च पुनः तादृशेषु व्यसनदोषात् अनभियुक्तेषु पुनः आरोप्यमाणः सकलस्य एव राज्यस्य मूलं हस्त्यश्वम् अवसादयति (ग)। हिङ्गुरातबलगुप्तयोः अत्यन्तलुब्धप्रकृतिकयोः सकलराज्यसम्प्रदानेनापि अपरितुष्यतोः अनुग्रहः कथं कर्त्तुं शक्यते ? राजसेनभागुरायणयोस्तु स्वधनप्राणनाशभीतयोः कुतोऽनुग्रहस्य अवकाशः ? रोहि-

---

अपेक्षमाणेन आत्मनोऽनन्तरम् अव्यवहितम् अव्यवहितोत्तरकालवर्त्ति इत्यर्थः। अमात्यपदं सचिवत्वं चालितः प्रापितः।

(ग) आक्षिप्ताधिकारयोः आक्षिप्तः आक्षिप्तः अधिकारः ययोः तयोः। अधिकारारोपणम् अधिकारे स्थापनम्। व्यसनदोषात् स्त्रीमद्यमृगयाद्यासक्तिदोषात्। अनभियुक्तेषु अकार्य्येषु अनवहितेषु अयोग्येषु इत्यर्थः। अवसादयति क्षयं प्रापयति।

तामविजयवर्म्मणोरपि दायादमानप्रदान [दह्यमानयोः] पीड़ितयोः मानमपि अपमानं मन्यमानयोः अत्यन्तमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति परिहृतः पूर्वः पक्षः। उत्तरोऽपि (घ) खलु वयम् अचिरात् अधिगतनन्दैश्वर्य्याः सहोत्थायिनं प्रधानपुरुषवर्गम् उग्रेण दण्डेन पीड़यन्तो, नन्दकुलानुरक्तानां प्रकृतीनाम् अविश्वास्या मा [भूम] भवाम इत्यतः परिहृत एव। तत् एवमनुगृहीतास्मद्भृत्यपक्षो राक्षसोपदेशश्रवणप्रवणो महीयसा म्लेच्छराजबलेन परिवृतः, पितृवधामर्षितः पर्वतकपुत्रो मलयकेतुः अस्मान् अभियोक्तुम् उद्यत इति,सोऽयं व्यायामकालो(ङ)न उत्सवकाल इति। अतो दुर्गसंस्कारे आरब्धव्ये किं कौमुदीमहोत्सवेन इति प्रतिषिद्धः।

राजा। आर्य्य! बहु प्रष्टव्यमत्र।

चाण। वृषल! विस्रब्धं पृच्छ, ममापि बह्वाख्येयम् (च) अत्र।

राजा। एष पृच्छामि।

चाण। अहमपि एष कथयामि।

---

* (घ) पूर्वः पक्षः अनुग्रहपक्षः परिहृतः परित्यक्तः। उत्तरोऽपि निग्रहरूपः पक्ष इत्यर्थः, परिहृत इत्यग्रे णान्वयः।

(ङ) निग्रहपक्षपरिहारे हेतुमाह—अविश्वास्या मा भवाम इति भविष्यत्सामीप्ये लट्, [मा भूमेति क्वचित् पाठः नन माङि लुङिति लुङ्।] अविश्वास्यत्वे हेतुः प्रधानपुरुषवर्गमिति उग्रेण तीक्ष्णेन निग्रहरूपेण पीडयन्तः तथाच प्रधानपुरुषाणां पीडनमेव अविश्वास्यत्वे हेतुरिति भावः। अनुगृहीतास्मद्भृत्यपक्षः अनुगृहीतः अनुकम्पया अवलम्बितः अस्मद्भृत्यपक्षः भद्रभटादिवर्गो येन तादृशः। एतेन तस्य बलादिसम्पन्नत्वं दुर्ज्जयत्वं, राक्षसोपदेशेत्यादिना युक्तोपायलाभात् दुर्भेद्यत्वम्, म्लेच्छबलसङ्गत्या अदण्ड्यत्वं दुर्ज्जयत्वञ्च, पितृवधामर्षेण अमर्षयत्वञ्च सूचितम्। व्यायामकालः व्यायामस्य विशिष्टायासस्य सेनासंग्रहदुर्गसंस्कारादिरूपस्य कालः समयः।

(च) आख्येयं वक्तव्यम्।

राजा। योऽयम् अस्माकमस्य सर्वस्यैव अनर्थहेतुर्मलयकेतुः सः कस्मात् आर्य्येण अपक्रामन् उपेक्षितः ?

चाण। वृषल! मलयकेतोः अपक्रमणानुपेक्षणे द्वयी गतिः (क) स्यात्; अनुगृह्येत निगृह्येत वा। अनुग्रहे पूर्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत। निग्रहे तावत् अस्य, पर्वतकोऽस्माभिः व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात्। प्रतिश्रुतार्द्धराज्यप्रतिपादनेऽपि पर्वतकविनाशः केवलं कृतघ्नता-मात्रफलः स्यात् इति मलयकेतुः अपक्रामन् उपेक्षितः (ज)।

राजा। आर्य्य! अत्र तावदेवम्। राक्षसः पुनः इहैव अन्तर्नगरे (झ) वर्त्तमान आर्य्येण उपेक्षित इत्यत्र किमुत्तरम् आर्य्यस्य ?

चाण। वृषल! राक्षसोऽपि खलु निजस्वामिनि स्थिरानु-रागित्वात् सुचिरमेव अत्र सहवासाच्च शीलज्ञानां नन्दानु-

---

(क) अपक्रमणानुपेक्षणे अपक्रमणस्य इतः पलायनस्य अनपेक्षणे उपेक्षाविरहे उपेक्षायाम् अकृतायाम् इत्यर्थः। द्वयी द्विविधा गतिः उपायः, द्विविधयोर्गत्यो-रेकतरा आश्रयणीया स्यादित्यर्थः।

(ज) एवं निग्रहानुग्रहौ च तदुपायावित्याह—अनुगृह्येतेत्यादि। निग्रहे इति।— एव निग्रहानुग्रहौ तदुपायावित्युक्त्वा अनुग्रहेऽनिष्टं प्रदर्श्य निग्रहे दोषमाह—निग्रहे इति। अस्य मलयकेतोर्निग्रहे दण्डने कृतघ्नतायाः कृतोपकारस्य अपकारित्वरूपायाः हस्तः हस्तावलम्बनं स्वयम् आत्मनैव दत्तः स्यात्, अस्माभिः पर्वतको हत इति कृतघ्नताप-वादः प्राप्तहस्तावलम्बन इव समुज्जिहीत् इत्यर्थः। एवं निग्रहे दोषमुक्त्वा प्रतिश्रुत-राज्यार्द्धप्रतिपादनरूपानुग्रहपक्षे दोषमाह—प्रतिश्रुतेत्यादि। पर्व्वतकविनाशः अस्मत्कृत इति शेषः पर्व्वतकस्य विनाशः विनाशनं [विपूर्व्वात् नशेर्ण्यन्तात् घञ्।] कृतघ्नतैव कृतघ्नतामात्रम् [मयूरव्यंसकादि समासः।] तदेव परं प्रयोजनमुद्देश्यं यस्य तथाभूतः स्यात् प्रतिश्रुतराज्यार्द्धदाने पर्वतकहननं किं फलकं स्यात्? केवलं कृतघ्नतामात्रफलकं तत् स्यादित्याशयः।

(झ) अत्र तावदेवम् उत्तरमिति शेषः। अन्तर्नगरे नगरान्तरे नगरमध्ये इत्यर्थः।

रक्तानां प्रकृतीनाम् अत्यन्तं विश्वास्यः, प्रज्ञापुरुषकाराभ्याम् उपेतः, सहायसम्पदा युक्तः, कोषबलवानिहैव अन्तर्नगरे वर्त्तमानो महान्तं खलु अन्तःकोपम् उत्पादयेत्। दूरीकृतस्तु, वाह्यकोपम् उत्पादयन्नपि न दुःखसाध्यो भविष्यति इत्यतोऽपक्रामन् उपेक्षितः (ञ)।

राजा। तत् किमर्थम् इहस्थ एव उपायैः न उपक्रान्तः? (ट)

चाण। अथ कथम् अपक्रान्तो भविष्यति ननु उपायैः एव असौ हृदयेशयः शङ्कुरिव उद्धृत्य दूरीकृतः (ठ)। दूरीकरणस्य च उक्तं प्रयोजनम्।

राजा। आर्य्य! कस्माद्विक्रम्य न गृहीतः?

चाण। वृषल! राक्षसः खलु असौ विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्। एवं सति उभयथापि दोषः। पश्य,—

स हि भृशमभियुक्तो यद्युपेयाद्विनाशं,
ननु वृषल! वि[यु]मुक्तस्तादृशेनापि पुंसा।

---

(ञ) शीलज्ञानां मन्त्रविवविदाम। प्रज्ञापुरुषकाराभ्यां बुद्धिपौरुषाभ्याम। महायवतो धीपौरुषयुतस्यापि निर्द्धनस्य न कार्य्यान्तगामित्वमिति दर्शयन्नस्य ततसम्पत्ति मप्याह—कोषबलेत्यादि। नैनासौ मन्वथा तदानीं दुर्निग्राह्य इत्युपेक्षित इति भावः। अन्तःकोपम आभ्यन्तरविद्वेषम। वाह्यकोपं वहिर्विद्वेषम्।

(ट) उपक्रान्तः चेष्टितः [illegible] ( कर्त्तरि क्तः।)

(ठ) कथमपक्रान्तः अपक्रम्य गत [illegible] नाम्यतीति उपायैरेव सामादिभिरेव असौ हृदयेशयः हृदयबिद्धः शङ्कुः कील इव उद्धृत्य दूरीकृतः अपसारितः। यथा हृदयाबद्ध-शङ्कोस्तत्र स्थितिकालेऽधिकपीडादायकता [illegible] च ततकृतव्रणस्य सुकरोपायसाध्यता एवमस्यान्तिकस्थित्याधिकदोष[illegible] [illegible] च सुखसाध्यता इति बुद्धेव नातस्यस प्रसाधनाय यत्नः कृत इति भावः।

स हीति।—स राक्षसः भृश[illegible] अभियुक्तः अस्मद् बलैः आक्रान्तः ननु यदि विनाशम् उपेयात् प्राप्नुयात्, [illegible] हे मौर्य्य! तादृशेन प्रभुभक्ति-

अथ तव बलमुख्यान् नाशयेत्, सापि पीड़ा,
नवगज इव तस्मात् सोऽभ्युपायैर्विनेयः ॥ २५ ॥

राजा। न शक्नुमो वयम् आर्य्यस्य वाचा वाचम् अतिशयितुं, सर्वथा अमात्यराक्षस एव अत्र प्रशस्यतरः (ङ)।

चाण। [सक्रोधम्।] न भवान् इति वाक्यशेषः। मा तावत् एवम्। भो वृषल! तेन किं कृतम्?

राजा। यदि न ज्ञायते, तदा श्रूयताम्। तेन खलु महात्मना।—

लब्धायां पुरि यावदिच्छमुषितं, कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः।
अत्यर्थं विपुलैः सुनीतिविभवैः सम्मोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ॥२६॥

चाण। [विहस्य।] वृषल! एतत् कृतं राक्षसेन?

---

शशशालिना पुंसा विमुक्तः विरहितः त्वमिति भवेरिति च अध्याहार्य्यम्। अथ यदि तव बलमुख्यान् प्रधानबलानि नाशयेत् सापि पीड़ा क्षतिः, तस्मात् नवगजः नवबद्धः गज इव स राक्षसः अभ्युपायैः सामादिभिः विनेयः दम्यः वशीकार्य्यः। मालिनी वृत्तम् ॥ २५ ॥

(ङ) प्रशस्यतरः श्रेष्ठः।

लब्धायामिति।—लब्धायाम् अस्माभिरिति शेषः, अधिकृतायां पुरि राजधान्यां कुसुमपुरे इत्यर्थः नः अस्माकं गले पादं कृत्वा दत्त्वा यावदिच्छं यावत् कालं तस्य इच्छा इत्यर्थः उषितं स्थितं, तथा अस्मद्बलानां जयघोषणादिषु बलात् स्वबलमाश्रित्य व्याघातः कृतः। येन इत्युक्तम्, अत्यर्थं विपुलैः महद्भिः सुनीतिविभवैः सुनयकौशलैः मोहं "अयं दुष्टो न वा" इति संशयम् "दुष्ट एव" इति भ्रमं वा आपादिताः प्रापिता नः अस्माकं मतयः बुद्धयः विश्वास्येषु अपि स्वेषु निजेषु वर्गेषु पक्षे(क्ष्ये)षु न विश्वसन्ति। तथाच लब्धाधिकारा अपि वयं किञ्चित् कर्त्तुमसमर्था इति तस्य प्रशस्यतरत्वमिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

राजा। अथ किम्। एतत् ज्ञातम् अमात्यराक्षसेन।

चाण। वृषल! मया पुनर्ज्ञातं, नन्दमिव भवन्तम् उद्धृत्य, भवानिव भूतले मलयकेतुः अधिराज्यम् आरोपितः।

राजा। अलम् उपालभ्य (ढ)? आर्य्य! दैवेन इदम् अनुष्ठितं, किम् अत्र आर्य्यस्य?

चाण। हे मत्सरिन्! (ण)।—

आरुह्यारूढ़कोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूड़ां,
लोकप्रत्यक्षमुग्रां, सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम्।
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः, पर्य्यायभूताः पशव इव हताः पश्यतो राक्षसस्य ॥२७॥

अपिच,—

गृध्रैराबद्धचक्रं वियति चलनया दीर्घनिष्कम्पपक्षैः
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः।
नन्दानां नन्दयन्तः पितृवनिलयान् प्राणिनः पश्य, चैतान्
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः ॥२८॥

---

(ढ) अलमुपालभ्य? अलं तिरस्कारेण? तिरस्कारं मा कुरु इत्यर्थः।

(ण) मत्सरिन् मत्सरोऽन्यशुभद्वेषः सः अस्यास्तीति तत्सम्बोधने।

आरुह्येति।—आरूढ़स्य जातस्य कोपस्य स्फुरणेन विषमितया कुटिलया अग्राङ्गुल्या अङ्गुल्यग्रभागेण मुक्ता बन्धनात् च्याविता चूड़ा शिखा यत्र तां, लोकप्रत्यक्षं सकलरिपुकुलोच्छेददीर्घां सकलानां रिपुकुलानां सपुत्रनन्दवंशानाम् उच्छेदेन दीर्घाम् अतिमहतीम् अत एव उग्रां सवंशनन्दकुलघातनार्थत्वेन दारुणां प्रतिज्ञाम् आरुह्य आश्रित्य कृत्वेति यावत् केन अन्येन मद्व्यतिरिक्तेन जनेन पश्यतः राक्षसस्य (अनादरे षष्ठी) पश्यन्तं राक्षसमनादृत्य इत्यर्थः नवनवतिशतद्रव्यकोटीश्वराः प्रचुरैश्वर्य्यशालिन इत्यर्थः अत एव अवलिप्ताः गर्वपूर्णाः ते प्रसिद्धाः नव नन्दाः पर्य्यायभूताः पशव इव पशुपर्य्यायाः इव हताः नाशिताः? न केनापीत्यर्थः। स्रग्धरा वृत्तम् ॥ २७ ॥

गृध्रैरिति।—दीर्घनिष्कम्पपक्षैः दीर्घाः आयताः निष्कम्पाः निश्चलाः पक्षाः येषां तैः गृध्रैः वियति आकाशे आबद्धचक्रं रचितचक्राकारवेष्टनं यथा तथा चलनया गत्या धूमैः

राजा। अन्येनैव इदम् अनुष्ठितम्।

चाण। केन?

राजा। नन्दकुलविद्वेषिणा दैवेन इदम् अनुष्ठितम्।

चाण। दैवम् अविद्वांसः प्रमाणयन्ति। (त)

राजा। विद्वांसोऽपि अविकत्थना भवन्ति? (थ)

चाण। [क्रोधं नाटयन्।] वृषल! वृषल! भृत्यमिव माम् आरोढुम् इच्छसि?

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः—

[भूमौ पादप्रहारं कृत्वा।]

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः।
प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना
परीतः कालेन, ज्वलयसि पुनः क्रोधदहनम्॥ २९॥

---

चिताग्निधूमैः ध्वस्तार्कभासां तिरोहितसूर्यकिरणानां दिशां मण्डलं मघन समेघमिव दर्शयन्तः एतान् पितृवननिलयान् श्मशानवासिनः प्राणिनः नन्दयन्तः हर्षयन्तः नन्दानां नवानां सुतबहुलवसावाहिनः देहनिःसृतप्रचुरहव्यं दधारिणः एते पुरो दृश्यमाना हव्यवाहाः चिताग्नयः प्रेतकृत्यप्रज्वालितकृशानव इति यावत् अद्यापि न निर्भान्त निर्वाणं प्राप्नुवन्ति पश्य अवलोकय। सपुत्रनन्दानां बहुत्वात् तच्चितावह्नीनां बहुत्वम्। स्रग्धरा वृत्तम्॥२८॥

(त) प्रमाणयन्ति प्रमाणीकुर्वन्ति कार्य्यसाधनतया अनुमिमते इति शेषः।

(थ) अविकत्थनाः आत्मश्लाघारहिताः।

शिखामिति।—शिखां बद्धामपि प्रतिज्ञापारगमनादिति भावः मोक्तुं स्खलयितुम् अयं करः पुनः धावति। एष चरणः प्रतिज्ञाम् आरोढुं कर्तुं पुनः चलति। अधुना कालेन मृत्युना परीतः प्राप्तस्त्वं नन्दानां प्रणाशात् दाह्याभावात् इति भावः प्रशमं शान्तिम् उपयातं मम क्रोधदहनं पुनः ज्वलयसि (उपसर्गहीनो ज्वलधातुः वैकल्पिकघटादिः) उद्दीपयसि पुनरित्युक्तिः पूर्ववत् दाह्यसम्पत्त्या दाहकत्वसम्भावनार्था। शिखरिणी वृत्तम्॥ २९॥

राजा । [ सावेगं स्वगतम् । ] अये ! तत् कथं सत्यमेव कुपित आर्य्यः ? तथाहि,—

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गोद्भेद[द्भूत]धूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा ।
मन्ये रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या,
सञ्जातोदग्रकम्पं कथमपि धरया धारितः पादघातः ॥३०॥

चाण । [ कृतकं कोपं संहृत्य । ] वृषल ! वृषल ! अलम् उत्तरोत्तरेण ? यदि अस्मत्तो वरीयान् राक्षसोऽवगम्यते, तस्मात् इदं शस्त्रं तस्मै दीयताम् इति । [ शस्त्रमुत्सृज्य उत्थाय च प्रत्यक्षवत् आकाशे लक्ष्यं बद्धा स्वगतम् ] राक्षस ! राक्षस ! एष एव भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।—

चाणक्यतः स्खलितभक्तिमहं सुखेन
जेष्यामि मौर्य्यमिति सम्प्रति यः प्रयुक्तः ।
भेदः, किलैष भवता सकलः, स एव
सम्पत्स्यते, शठ ! तवैव विनाशनाय ॥ ३१ ॥

[ इति निष्क्रान्तः चाणक्यः । ]

---

संरम्भेति ।—ताण्डवे नृत्ये संरम्भात् कोपात् "संरम्भः सम्भ्रमे कोपे" इति कोष । स्पन्दिनः चलतः पक्ष्मणः नेत्रलोम्नः क्षरतः निःसरतः अमलजलस्य अश्रुणः क्षालनेन क्षामया क्षीणया अपि पिङ्गया नेत्रभासा नयनकान्त्या भ्रूभङ्गोद्भेदधूमं भ्रुवोः भङ्गः भ्रूभङ्गः भ्रूकुटिः तस्य उद्भेद एव धूमः यस्य तादृशं ज्वलितमिव अग्निमिति ध्वनिः रौद्रं रसम् अभिनयतः दर्शयतः रुद्रस्य ["कृत्यर्थप्रयोगे वा" इति सूत्रेण कर्म्मणि षष्ठी] संस्मरन्त्या धरया पृथिव्या पादघातः चाणक्यकृतः पादप्रहारः सञ्जातोदग्रकम्पं सञ्जातः उत्पन्नः उदग्रः महान् कम्पो यत्र तत् यथा तथा कथमपि धारितः इति मन्ये सम्भावयामि । स्रग्धरा वृत्तम् ॥ ३० ॥

चाणक्यत इति ।—हे शठ ! धूर्त्त ! अहं चाणक्यतः स्खलितभक्तिं च्युतानुरागं मौर्य्यं चन्द्रगुप्तं सुखेन जेष्यामि इति बुद्ध्या भवता य एषः सकलः सम्पूर्णः भेदः

राजा। आर्य्य! विज्ञापय! अद्य प्रभृति अनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति गृहीतार्थाः प्रकृतयः क्रियन्ताम्।

कञ्चु। [स्वगतम्।] कथं निरुपपद एव (ट) चाणक्यो न आर्य्यचाणक्य इति। हन्त! सत्यमेव हृतोऽधिकारः। अथवा न खलु अत्र वस्तुनि देवं दोषेण अवगन्तुम् अर्हामि।—

स दोषः सचिवस्यैव, यदसत् कुरुते नृपः।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम्॥२२॥

राजा। आर्य्य! किं विचारयसि?

कञ्चु। देव! न किञ्चिद् विचारयामि, किन्तु एतद् विज्ञापयामि, दिष्ट्या देव इदानीं देवः संवृत्त इति (ध)।

राजा। [आत्मगतम्।] एवम् अस्मासु निगृह्यमाणेषु स्वकार्य्यसिद्धिकामः, सकामो (न) भवतु आर्य्यः। [प्रकाशम्।]

---

प्रयुक्तः अतः, स एव तवैव विनाशनाय पराभवाय ("क्लृपि सम्पद्यमाने" इति चतुर्थी) सम्पत्स्यते परिणंस्यति। वसन्ततिलकं वृत्तम्॥२१॥

(ट) निरुपपद, नास्ति उपपदं सन्निहितपदं यस्य सः उपपदशून्यः आर्य्यादिगौरवसूचकपदशून्य इत्यर्थः।

देवस्य दोषाभावो यदुक्तं तत् समर्थयते—स दोष इति। नृपः यत् असत् कुरुते आचरति, स असदाचरणं (विधेयप्राधान्यात् पुंस्त्वम्।) सचिवस्य मन्त्रिण एव दोषः नतु नृपस्य। तत्र दृष्टान्तयति,—गजः यन्तुः निषादिनः प्रमादेन अनवधानतया व्यालत्ववाच्यतां दुष्टतापवादं याति प्राप्नोति, मन्त्रिणा राजा कुपथगमनात् निवारयितव्यः तदकरणे तस्यैव दोषभागित्वं नतु राज्ञ इति भावः। अनुष्टुप् वृत्तम्॥ २२॥

(ध) देवः संवृत्तः देवपदवाच्यः जात इत्यर्थः, पराधीनतया मुक्तत्वादिति भावः।

(न) सकामः सफलमनोरथः।

शोणोत्तरे! अनेन शुष्ककलहेन शिरोवेदना मां बाधते, तच्छयनगृहम् आदेशय।

प्रती। एदु एदु महाराओ (२)।

राजा। [आसनात् उत्थाय आत्मगतम्।]

आर्य्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्विवरं प्रवृत्ता।
ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा? ॥ २३ ॥

[इति निष्क्रान्ताः सर्वे।]

इति तृतीयोऽङ्कः।]

---

(२) एतु एतु महाराजः।

---

गुरोश्चाणक्यस्यावमाननकर्मणि आत्मनोऽविनयमाशङ्क्य आह—आर्य्याज्ञयैवेति। आर्य्यस्य चाणक्यस्य आज्ञया एव आदेशेन एव न तु स्वबुद्ध्या लङ्घितगौरवस्य लङ्घितम् अतिक्रान्तं गौरवं सम्मानं येन तादृशस्य मम बुद्धिः अवनेः पृथिव्याः विवरं छिद्रं प्रवेष्टुं प्रवृत्ता उद्यता। एवमात्मनोऽविनये आर्य्याज्ञैव कारणमित्युक्त्वा अन्यथा गुरोरपमाननाकरणे दोषमाह—ये तु सत्यमेव ( नतु अहमिव मिथ्याकोपाज्ञयेत्यर्थः ) गुरून् न प्रतिमानयन्ति नाद्रियन्ते, नु वितर्के। लज्जा तेषां हृदयं कथं न भिनत्ति? न विदारयति? अपि तु विदारयत्येव इति तर्कयामीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ २३ ॥

# चतुर्थोऽङ्कः ।

—००४०८००—

[ ततः प्रविशति अध्वगवेशः पुरुषः ]

पुरु । हीमाणहे हीमाणहे (क) ।

जोअणसअं समधिअं को णाम गदागदं इह करेइ ।
अत्याणगमणगुरुई प्पहुणो अखा जइ ण होइ (१) ॥१॥

ता जाव अमच्चरक्खसस्स ज्जेव गेहं गच्छामि । [ परिश्रान्तवत् परिक्रम्य । ] भो ! को एत्थ दुआरिआणं ? णिवेदेह दाव भट्टिणो अमच्चरक्खसस्स, एसो क्खु करहको करहको (ख) विअ कज्जं तुवरन्तो पाडलिपुत्तादो आगदो त्ति (२) ।

---

(१) योजनशतं समधिकं को नाम गतागतमिह करोति ।
अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति ॥

(२) तद् यावत् अमात्यराक्षसस्यैव गेहं गच्छामि । भोः ! कोऽत्र दौवारिकाणाम् ? निवेदय तावद् भर्तुः अमात्यराक्षसस्य, एष खलु करभकः करभक इव कार्य्यं त्वरयन् पाटलिपुत्रादागत इति ।

---

(क) राक्षसादिष्टः करभकः कुसुमपुरे स्थितं स्तनकलसाह्ववैतालिकं प्रति तत्र त्वरितमेवागत्य प्रभुनिर्दिष्टकार्य्यं संपाद्य परावृत्तः तूर्णं सुदूरं यातायातखिन्नः स्वामिनिदेशं समर्थयमानः ब्रवीति—हीमाणहे इति । आश्चर्य्यसूचकनिपातः अतिशयद्योतनाय द्विरुक्तः ।

योजनशतमिति ।—अस्थाने अयोग्यस्थाने गमनेन गुरुका गुर्वी अनुल्लङ्घनीया इत्यर्थः प्रभोः आज्ञा यदि न भवति, तदा को जनः इह अस्मिन् जगति समधिकं सङ्गतमधिकं यत्र ("प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः" इति गतपदलोपो बहुव्रीहिः), साधिकमित्यर्थः, योजनशतं व्याप्य को नाम ? न कोऽपीत्यर्थः गतागतं करोति । गतागतमिति भावे क्तः । समाहारद्वन्द्वः ॥ १ ॥

(ख) करभक इव करिशावक इव ।

[ प्रविश्य दौवारिकः। ] भद्द ! मा उच्चं मन्तेहि। एसो क्खु भट्टा अमच्चरक्खसो रज्जचिन्ताजणिदेण जाअरेण समुप्पस्ससीसवेअणो, अज्ज वि दाव ण सअणदलं मुञ्चदि, ता चिट्ठ दाव मुहुत्तअं, जाव से लद्धावसरो भविअ, भवदो आगमणं णिवेदेमि (३)।

पुरु। भद्दमुह ! जधा दे रोअदि [ तधा करेहि ] (४)।

[ ततः प्रविशति शयनगत आसनगतेन शकटदासेन अनुगीयमानश्चिन्तितो राक्षसः। ]

राक्ष। [ आत्मगतम्। ]

मम विमृशतः कार्य्यारम्भे विधेरविधेयतां
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम्।
अथ च विहते तत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः ॥२॥

(३) भद्र ! मा उच्चं मन्त्रय। एष खलु भर्त्ता अमात्यराक्षसः राज्यचिन्ताजनितेन जागरेण समुत्पन्नशीर्षवेदनोऽद्यापि तावत् न शयनतलं मुञ्चति, तस्मात् तिष्ठ तावन्मुहूर्त्तं, यावत् तस्य लब्धावसरो भूत्वा, भवत आगमनं निवेदयामि।

(४) भद्रमुख ! यथा ते रोचते। [ अधिकपाठे—तथा कुरु ]।

ममेति।—कार्य्यारम्भे कार्य्यसाधननिमित्तमित्यर्थः विधेः दैवस्य अविधेयताम् अवश्यतां विमृशतः सर्वं दैवस्यैवाधीनं न तु दैवं कस्यापीति चिन्तयत इत्यर्थः, तथा सहजकुटिलां स्वभाववक्रां दुरधिगमामित्यर्थः। कौटिल्यस्य चाणक्यस्य मतिं प्रचिन्तयतः तदुद्भावितान् विषयान् ऊहा चिन्तयतः, अथ तत्कृत्यानां तस्य चाणक्यस्य कृत्यानां कार्य्याणाम् अस्मासु प्रयुक्तानामिति भावः, उपग्रहे प्रतीकारे अस्माभिः कृते इति शेषः, निकामं सम्यक् विहते चाणक्येन स्वबुद्ध्या विनाशिते सति इदं कार्यं केन प्रकारेण साधितमिति चिन्तया उन्निद्रस्य निद्रारहितस्य मम इह अनिशं निशाः रजन्यः प्रयान्ति गच्छन्ति। तत्तद्विषयचिन्तया जाग्रतैव मया सर्व्वा निशा यापिता इत्यर्थः। हरिणीवृत्तम् ॥ २ ॥

अपि च,—

कार्य्योपक्षेपमादौ, तनुमपि रचयंस्तस्य विस्तारमिच्छन्,
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।
कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि, पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥३॥

तदपि नाम दुरात्मा चाणक्यवटुः,—"

[ उपसृत्य दौवारिकः । ] जेदु जेदु ( ५ )"—

---

(५) जयति जयति ।

---

नाटकप्रणयनसाम्येन स्वक्लेशं वर्णयति—कार्य्योपक्षेपमिति । आदौ प्रथमं, पक्षान्तरे—आदौ अभिनेयस्यादौ "यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा । प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्" ॥ इत्युक्तलक्षणे नाटकारम्भे, तनुमपि स्वल्पमपि कार्य्यस्य मलयजयादि-रूपस्य उपक्षिप्यते आरभ्यतेऽनेनेति उपक्षेपः सामाद्युपायः तम् उपक्षेपम् उपायं रचयन् प्रयुञ्जानः पक्षान्तरे—कार्य्यस्य अभिनेयार्थस्य उपक्षेपं "काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इत्युक्तलक्षणं प्रस्तावनारूपमित्यर्थः रचयन् प्रणयन्, ततः तस्य कार्य्यस्य विस्तारं बाहुल्यमिच्छन्, अथ गर्भितानां जातगर्भाणां फलजननोन्मुखानामित्यर्थः बीजानां साधनानां गूढं प्रागनभिव्यक्तत्वात् गुप्तं फलम् अतिगहनं यथा तथा उद्भेदयन् प्रकटयन्, अन्यत्र गर्भितानां जातगर्भाणां "फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन । गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः ॥" इत्युक्तलक्षणगर्भवतां बीजानाम् "अल्पमात्रं समुद्दिष्टं बहुधा यद् विसर्पति । फलस्य प्रथमोपायो बीजमित्यभिधीयते ॥" इत्युक्तलक्षणानां फलप्रदानहेतूनाम् अतिगहनं अतिदुर्बोधं फलं गूढं यथा तथा उद्भेदयन् कार्य्यरूपेण प्रकाशयन्, बुद्ध्या विमर्शम् इतिकर्त्तव्यतालोचनं कुर्वन्, तथा प्रसृतं विस्तृतमपि कार्य्य-जातं संहरन् सङ्कोचयन्, अन्यत्र प्रसृतं विस्तृतं कार्य्यजातं बुद्ध्या विमर्शं "यत्र मुख्य-फलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ॥" इत्युक्तलक्षणं विमर्शं कुर्वन्, तथा संहरन् "बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥" इत्युक्तलक्षणनिर्वहणरूपमुपसंहारं कुर्वन्, अस्मद्विधो वा नाटकानां कर्त्ता प्रणेता वा इमं वर्णितरूपं क्लेशम् अनुभवतीति । अत्र प्रकृताप्रकृतयोः वर्णनात् श्लेषः ; प्रस्तुताप्रस्तुतयोः मन्त्रिनाटककारयोः

राक्ष। "—अभिसन्धातु (ग) मक्यः स्यात्—"

दौवा।"—अमच्चो (६)।

राक्ष। [वामाक्षिस्पन्दं सूचयित्वा आत्मगतम्।] चाणक्य-वटुर्जयति!"—अभिसन्धातुं मक्यः स्यात् अमात्य' इति वामाक्षिस्पन्दनेन प्रस्तावगतं प्रतिपादयति। तथापि न उद्यमस्त्याज्यः। [प्रकाशम्।] भद्र! किमसि वक्तुकामः?

दौवा। अमच्च! एसो क्खु करहओ पाड़लिपुत्तादो आअदो, इच्छदि अमच्चं पेक्खिदुं (७)।

राक्ष। अवारितं प्रवेशयैनम्।

दौवा। जं अमच्चो आणवेदि त्ति। [निष्क्रम्य पुरुषम् उपसृत्य।] भद्द! एसो क्खु अमच्चो चिट्ठदि, ता उपसप्प णं (८)।

[इति निष्क्रान्तो दौवारिकः।]

कर। [राक्षसमुपसृत्य।] जेदु जेदु अमच्चो (९)।

राक्ष। [नाट्येन अवलोक्य।] भद्र! करभक! स्वागतम् उपविश्यताम्।

कर। जं अमच्चो आणवेदि त्ति (१०)।

[भूमौ उपविशति।]

---

(६) अमात्यः।

(७) अमात्य! एष खलु करभकः पाटलिपुत्रादागतः, इच्छति अमात्यं प्रेक्षितुम्।

(८) यदमात्य आज्ञापयतीति। भद्र! एष खलु अमात्यस्तिष्ठति, तदुपसर्प एनम्।



(९) जयति जयति अमात्यः।

(१०) यदमात्य आज्ञापयतीति।

---

'एकधर्माभिसम्बन्धरूपतया दीपकालङ्कारस्य ततश्चानयोरङ्गाङ्गिभावेन सङ्करः। स्रग्धरा वृत्तम्॥ ३॥

(ग) अभिसन्धातुं प्रतारयितुम्।

राक्ष। [स्वगतम्।] अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधिः प्रहित इति, प्रभूतत्वात् (घ) प्रयोजनानां न खलु अवधारयामि। [इति चिन्तां नाटयति।]

[ततः प्रविशति वेत्रपाणिः अपरः पुरुषः।]

पुरु। ओसलध अज्जा! ओसलध। अवेध, माणहे! अवेध। (ङ) किं ण पेक्खध?—

दूले पच्चासत्ती दंसणमवि दुल्लहं अधम्मेहिं।
कल्लाणकुलघराणं देवाणञ्च भूमिदेवाणं (११) ॥४॥

[आकाशे।] अज्जा! किं भणाध, किं णिमित्तं एसा ओसालणा करीअदि? अज्जा! एसो क्खु कुमालो मलयकेदु, समुप्पण्णसीसवेअणं अमच्चरक्खसं सुणिअ, पेक्खिदुं इदो ज्जेव आअच्छदि। एदिणा कालणेण ओसालणा करीअदि (१२)।

[इति निष्क्रान्तः पुरुषः।]

---

(११) अपसरत आर्य्याः! अपसरत। अपेत मान्याः! अपेत। किं न पश्यत?—

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधर्म्मैः।
कल्याणकुलगृहाणां देवानाञ्च भूमिदेवानाम् ॥

(१२) आर्य्याः! किं भणथ, किं निमित्तमेषा अपसारणा क्रियते? आर्य्याः! एष खलु कुमारो मलयकेतुः, समुत्पन्नशीर्षवेदनम् अमात्यराक्षसं श्रुत्वा, प्रेक्षितुम् इत एव आगच्छति। एतेन कारणेन अपसारणा क्रियते।

---

(घ) प्रभूतत्वात् बाहुल्यात्।

(ङ) अपेत अपगच्छत।

दूरे इति।—कल्याणकुलगृहाणां मङ्गलालयानां देवानां भूमिदेवानां राज्ञाञ्च प्रत्यासत्तिः नैकट्यसम्बन्धः दूरं आस्तामिति शेषः, अधर्म्मैः अपुण्यवद्भिः दर्शनमपि दुर्लभम् ॥ ४ ॥

[ ततः प्रविशति भागुरायणेन सह कञ्चुकिना
अनुगम्यमानो मलयकेतुः । ]

मल०। [ निश्वस्य आत्मगतम् ।] अद्य दशमो मासस्तातस्य उपरतस्य। न च अस्माभिर्वृथा पुरुष[षाभिमानं]कारम् उद्वहद्भिः तमुद्दिश्य, तोयाञ्जलिरपि आवर्जितः (च)। अथ वा, प्रतिज्ञातम् एतत् पुरस्तात्।—

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकम्।
तादृङ्मातृजनस्य शोकजनितं सम्प्रत्यवस्थान्तरं,
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः॥५॥

तत् किम् इह बहुना?—

उद्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविनिहतेन पितुः पथा वा।



(च) आवर्जितः दत्तः।

वक्ष इति।—मया मातृजनस्य शोकजनितं तादृक् अवस्थान्तरं दशाविशेषं सम्प्रति शत्रुस्त्रीषु विषये विधाय कृत्वा गुरवे पित्रे निवापाञ्जलिः "पितृदानं निवापः स्यात्" इत्यमरः श्राद्धाङ्गं जलाञ्जलिः देयः। अवस्थान्तरं विशिनष्टि—वक्ष इत्यादिना विशेषणचतुष्टयेन। वक्षस्ताडनेन भिन्नानि भग्नानि रत्नवलयानि यत्र तादृशं, तथा भ्रष्टं स्वस्थानात् स्खलितम् उत्तरीयांशुकम् उत्तरीयवस्त्रं यस्मिन् तत् तथा, हाहा इति उच्चरितेन आर्त्तनादेन करुणं दीनं तथा भूरेणुभिः धूलिभिः रूक्षाः अचिक्कणाः अलकाः चूर्णकुन्तलाः यत्र तथोक्तम् "अलकाश्चूर्णकुन्तलाः" इत्यमरः। शार्दूलविक्रीडितं वृत्तम्॥ ५॥

उद्यच्छतेति।—मया अकापुरुषानुरूपां वीरजनोचितां धुरं भारम् उद्यच्छता उद्वहता मता आजिविनिहतेन रणहतेन पितुः पथा पितृगतेन पथा मरणरूपेण गन्तव्यं वा, पितुराजिमरणाभावेऽपि तस्य मरणरूपपथ इह विवक्षितः स्वमरणप्रकारकथनायैव

आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः ॥ ६ ॥

[प्रकाशम् । ] आर्य्य ! जाजले ! उच्यन्ताम् अस्मद्वचनात् अनुयायिनो राजानः, एक एव अहम् अमात्यराक्षसस्य अतर्कितागमनेन (क) प्रीतिम् उत्पादयितुम् इच्छामि. अतः कृतमनुगमनक्लेशेन इति ।

कञ्चु । यत् आज्ञापयति कुमारः । [ परिक्रम्य आकाशे ] । भो भो राजानः ! कुमारः समाज्ञापयति, न खलु अहं केनचित् अनुगन्तव्यः । [इति विलोक्य सहर्षम्] । कुमार ! कुमार ! एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्वे एव राजानः । पश्यतु हि कुमारः ।—

सोत्सेधैः स्कन्धदेशैर्मुखरकविकयाकर्षणात्यर्थभुग्नैः
अश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात् ।
केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ता,
मर्य्यादां भूमिपाला जलधय इव ते देव ! नोल्लङ्घयन्ति ॥७॥

---

आशिविड़्भिर्मैत्युक्तम् । स्वजननीजनलोचनेभ्यः स्वमातृजननेत्रेभ्यः आच्छिद्य आक्रम्य बाष्पः रिपुवधूनयनानि शत्रुरमणीलोचनानि नेयः वा । वसन्ततिलकं वृत्तम् ॥६॥

(क) अतर्कितागमनेन सहसोपस्थितेन ।

सोत्सेधैरिति ।—कैश्चित् भूमिपालैः मुखरकविकया मुखरया खलिन्या आकर्षणेन अत्यर्थभुग्नैः अतिवक्रैः सोत्सेधैः उन्नतैः स्कन्धदेशैः उपलक्षिताः, ( विशेषणे तृतीया । ) तथा खुरपुटैः पुरस्तात् खम् आकाशं खण्डयन्त इव अश्वाः निरुद्धाः । केचित् भूपालाः विहतजवतया विघ्नितवेगतया मूकघण्टैः निःशब्दघण्टारवैः मातङ्गमुख्यैः हस्तीन्द्रैः सह निवृत्ताः । अतः हे देव ! भूमिपाला जलधय इव ते तव मर्य्यादां वेलामिव आज्ञां न उल्लङ्घयन्ति न अतिक्रामन्ति । अप्रतिहताज्ञतया सर्वेऽपि ते वशीभूता इति भावः । अत्र मातङ्गाश्वादीनां स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः । स्रग्धरा वृत्तम् ॥ ७ ॥

मल । आर्य्य ! जाजले ! त्वमपि सपरिजनो निवर्त्तस्व । भागुरायण एक एव माम् अनुगच्छतु ।

कञ्चु । यत् आज्ञापयति कुमारः ।

[ इति सपरिजनो निष्क्रान्तः । ]

मल । सखे ! भागुरायण ! विज्ञापितोऽहम् इह आगच्छद्भिः भद्रभटप्रभृतिभिः, यथा न वयम् अमात्यराक्षसद्वारेण कुमारम् आश्रयामहे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य, दुष्टामात्यपरिगृहीतात् चन्द्रगुप्तात् अपरक्ताः सन्तः कुमारम् आभिरामिकगुणयोगादा[ युक्तमा ]श्रयणीयम् आश्रयामह इति, तन्न मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः । (ज)

भागु । कुमार ! न एव अयम् अत्यन्तदुर्बोधोऽर्थः । पश्य, विजिगीषुम् आत्मगुणसम्पन्नः प्रियहितद्वारेण आश्रयणीयम् आश्रयेदिति ननु न्याय्य एव अयम् ।

मल । सखे ! भागुरायण ! ननु अस्माकम् अमात्यराक्षसः प्रियतमो हिततमश्च ।

भागु । कुमार ! एवमेतत्, किन्तु अमात्यराक्षसः चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते, तद् यदि कदाचित् चन्द्रगुप्तः चाणक्यम् अतिजितकाशिनम् असहमानः साचिव्यात् अवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वय एव अयमिति कृत्वा, सम्पत्सुहृज्जनापेक्षया च, अमात्यराक्षसः चन्द्रगुप्तेन सह सन्दधीत । चन्द्रगुप्तोऽपि पितृपारम्पर्य्यागत एव अयमिति कृत्वा, सन्धिम् अनु-

---

(ज) द्वारीकृत्य उपायीकृत्य आश्रित्य इत्यर्थः । आभिरामिकगुणयोगात् कमनीयगुणशालित्वात् । अधिगतः ज्ञातः ।

मन्येत। एवं सति अस्मासु अपि कुमारो न विश्वसेत् इति अयम् एषां वाक्यार्थः।

मल। युज्यते। सखे! भागुरायण! अमात्यराक्षसस्य गृहमार्गम् आदेशय।

भागु। इत इतः कुमारः। [ इति उभौ परिक्रामतः ]।

भागु। कुमार! इदम् अमात्यराक्षसस्य गृहं, प्रविशतु कुमारः।

मल। एष प्रविशामि। [ इति उभौ प्रवेशनं नाटयतः ]।

राक्ष। आः स्मृतम्। [ प्रकाशम्। ] भद्र! अपि दृष्टः त्वया कुसुमपुरे वैतालिकः स्तनकलसः?

कर। अमच्च! अध इं? (१३)

मल। सखे! भागुरायण! कुसुमपुरवृत्तान्तो वर्त्तते, तन्न उपसर्पावः (भ) शृणुवस्तावत् किं कारणम् इति।---

मन्त्रभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः॥ ८॥

भागु। यत् आज्ञापयति कुमारः।

राक्ष। भद्र! अपि तत् कार्य्यं सिद्धम्?

कर। अमच्चस्स प्पसाएण सिद्धम् (१४)।

---

(१३) अमात्य! अथ किम्!

(१४) अमात्यस्य प्रसादेन सिद्धम्।

---

(भ) नोपसर्पावः न समीपं गच्छावः।

मन्त्रभङ्गभयादिति।---अन्यथा अन्येन प्रकारेण विवृतः प्रकटितः अर्थो येषां तादृशेषु स्वैरालापेषु स्वेच्छालापेषु मन्त्रिणः मन्त्रभङ्गभयात् मन्त्रितार्थस्य प्रकाशभयात् राज्ञां प्रभूणामपि पुरः समक्षम् अन्यथा प्रकारान्तरेण कथयन्ति। अमात्यस्यैवायं धर्मः यदन्यथास्थितस्य वस्तुनः अन्यथाकथनमिति भावः। अनुष्टुप् वृत्तम्॥ ८॥

मल। सखे! भागुरायण! किं तत् कार्य्यम्?

भागु। कुमार! गहनः खलु सचिववृत्तान्तो, न एतावता परिच्छेत्तुं शक्यते। अवहितस्तावत् श्रोतुमर्हति कुमारः।

राच। भद्र! विस्तरेण श्रोतुम् इच्छामि।

कर। सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो, जधा, "करभअ! करभअ! कुसुमपुरं गच्छिअ, भणिदव्वो, मम वअणेण तुए वेतालिओ थणकलसो, जधा, चाणक्कहदएण तेसुं तेसुं आणाभङ्गेसुं अणुचिट्ठीअमाणेसुं, चन्दउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वोत्ति" (१५) (अ)।

राच। ततस्ततः?

कर। तदो मए पाड़लिउत्तं गच्छिअ, सुणाविदो अमच्चस्स सन्देसो वेआलिओ थणकलसो (१६)।

राच। ततस्ततः?

कर। एत्थन्तरे चन्दकुलविणासदुम्मणस्स पोरजणस्स परिओसं समुप्पाअन्तेण चन्दउत्तेण आघोसिदो कुसुमउरे कौमुदीमहोस्सवो। सोवि चिरआलपवत्तमाणजणिदपरि-

---

(१५) शृणोतु अमात्यः, अस्ति तावत् अहममात्येन आज्ञप्तो यथाः "करभक! करभक! कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो वैतालिकः स्तनकलसः यथा चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु. चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्य इति"।

(१६) ततो मया पाटलिपुत्रं गत्वा, श्रावितः अमात्यस्य सन्देशं वैतालिकः स्तनकलसः।

---

(अ) समुत्तेजनसमर्थैः समुद्दीपनकरैः। उपश्लोकयितव्यः श्लोकेन स्तोतव्यः।

ओसो, अहिमदबन्धुअणसमागमो विअ, सविसेसं बहुमाणिदो णअरजणेण (१७)।

राक्ष। [सवाष्पम्।] हा देव! नन्द!—

कौमुदी कुमुदानन्दे जगदानन्दहेतुना।
कीदृशी सति चन्द्रेऽपि नृपचन्द्र! त्वया विना॥ ९॥

भद्र! ततस्ततः?

कर। अमच्च! तदो सो लोअलोअणाणन्दभूदो अणि-च्छन्तस्स ज्जेव तधा णाअरजणस्स णिवारिदो चाणक्कहदकेण कौमुदीमहोस्सवो। एत्थन्तरे त्थणकलसेण पउत्ता चन्दउत्तस्स समुत्तेअणसमत्था सिलोअपरिबाटी (१८)।

राक्ष। [सहर्षम्।] साधु सखे! स्तनकलस! साधु। काले भेदबीजमुप्तम् अवश्यमेव फलम् उपदर्शयिष्यति। यतः,—

---

(१७) अत्रान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेन आघोषितः कुसुमपुरे कौमुदीमहोत्सवः। सोऽपि चिरकालप्रवर्त्तमान-जनितपरितोषः, अभिमतबन्धुजनसमागम इव, सस्नेहं बहुमानितः नगरजनेन।

(१८) अमात्य! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव तथा नागर-जनस्य निवारितचाणक्यहतकेन कौमुदीमहोत्सवः। अत्रान्तरे स्तनकलसेन प्रवर्त्तिता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी।

---

कौमुदीति।—हे नृपचन्द्र! जगदानन्दहेतुना त्वया विना कुमुदानन्दे कुमुदानां कैरवाणां कुत्सितामोदवतां कुजनानाञ्च प्रकाशकत्वात् रञ्जनाच्च आनन्दे आनन्दजनने चन्द्रे चन्द्रमसि चन्द्रगुप्ते च सत्यपि कौमुदी ज्योत्स्ना कौमुदीमहोत्सवश्च कीदृशी? किंप्रकारा? न सुखावहा इत्यर्थः। चन्द्रगुप्तस्य कुत्सितहर्षवतां हर्षकारकत्वात् तव च जगदानन्दहेतुत्वात् युवयोरतीव वैषम्यमिति भावः। व्यतिरेकालङ्कारश्च, स च चन्द्र-कौमुदीशब्दयोः श्लेषत्वात् श्लेषमूलः। अनुष्टुप् वृत्तम्॥ ९॥

सद्यः क्रीड़ारसच्छेदं प्राकृतोऽपि न मर्षयेत्।
किमु लोकाधिकं धाम बिभ्राणः पृथिवीभुजः [पतिः] ॥ १० ॥

मल। एवमेतत्। [ सद्यः क्रीड़ेत्यादि पुनः पठति। ]

राक्ष। ततस्ततः ?

कर। तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइरं अमच्चगुणं प्पसंसिअ प्पब्भंसिओ अहिआरादो चाणक्कहदओ (१८)।

मल। सखे! भागुरायण! गुणप्रशंसया दर्शितः चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः।

भागु। कुमार! न तथा गुणप्रशंसया, यथा चाणक्यवटोः निराकरणेन।

राक्ष। भद्र! किम् अयमेव एकः कौमुदीमहोत्सवः प्रतिषेधः चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणम् उत अन्यदपि अस्ति ?

मल। सखे! भागुरायण! चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति ?

---

(१८) ततश्चन्द्रगुप्तेन आज्ञाभङ्गकलुषितहृदयेन, सुचिरम् अमात्यगुणं प्रशस्य, प्रभ्रंशितोऽधिकारात् चाणक्यहतकः।

---

सद्य इति।—प्राकृतः क्षुद्रोऽपि जनः सद्यः विना कारणं हठादित्यर्थः क्रीड़ारसच्छेदं क्रीड़ायां यो रसः रागः तस्य छेदः भङ्गः तं, न मर्षयेत् सहेत, लोकाधिकम् अलौकिकं धाम तेजः बिभ्राणः धारयन् पृथिवीभुजः पृथिवीं भुङ्क्ते इति "इगुपधज्ञाप्रीकिरः कः" इति अन्वयः। राजा किमु मर्षयेत् ? अपि तु नैव सहेत इत्यर्थः। अनुष्टुप् वृत्तम् ॥१०॥

भागु। कुमार! एतत् फलं पश्यति, अतिमतिमान् चाणक्यः, निष्प्रयोजनमेव किमिति चन्द्रगुप्तं कोपयिष्यति। न च कृतवेदी चन्द्रगुप्त एतावता गौरवम् उल्लङ्घयिष्यति। सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात् कारणाद् यो विश्लेष (ट) उत्पद्यते स आत्यन्तिको भविष्यति इति।

कर। अमच्च! अत्थि अण्णं पि चन्दउत्तस्स कोवकारणं चाणक्के (२०)।

राक्ष। किं किम्?

कर। जधा, पढमं दाव उवेक्खिदो अणेण अवक्कमन्तो कुमारो मलयकेदू अमच्चरक्खसो अ (२१)।

राक्ष। [ सहर्षम्। ] सखे! शकटदास! हन्त! हस्ततलगतः सम्प्रति चन्द्रगुप्तो भविष्यति।

शक। इदानीं चन्दनदासस्य बन्धनान्मोक्षः, भवतां च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः।

भागु। [आत्मगतम्।] जातः सत्यं जीवसिद्धेः क्लेशच्छेदः।

मल। सखे! भागुरायण! हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यतीति व्याहरतः, (ठ) कोऽयमस्य अभिप्रायः?

---

(२०) अमात्य! अस्ति अन्यदपि कोपकारणं चाणक्ये।

(२१) यथा प्रथमं तावदुपेक्षितः अनेन अपक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च।

---

(ट) कृतवेदी कृतज्ञः। पुष्कलात् महतः। विश्लेषः भेदः।

(ठ) व्याहरतः कथयतः।

भागु । किम् अन्यत्, चाणक्यात् अपकृष्टस्य चन्द्रगुप्तस्य उद्धरणे सौकार्य्यम् अवश्यम् अवगच्छति (ङ) ।

राच । भद्र ! हृताधिकारः साम्प्रतं क्व असौ वटुः ?

कर । तहिं ज्जेव पाडलिपुत्ते पडिवसदि (२२) ।

राच । [सावेगम् ।] भद्र ! तत्रैव प्रतिवसति, न तपोवनं गतः, प्रतिज्ञां वा न पुनः समारूढ़वान् ?

कर । अमच्च ! तपोवणं गमिस्सदि त्ति सुणीअदि (२३) ?

राच । [सावेगम्] शकटदास ! न इदमुपपद्यते । पश्य,—

देवस्य येन पृथिवीतलवासवस्य
साग्रासनापनयजा निकृतिर्न सोढ़ा ।
सोऽयं स्वयंकृतनराधिपतेर्मनस्वी,
मौर्य्यात् कथं नु परिभूतिमिमां सहेत ? ॥११॥

मल । सखे ! भागुरायण ! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा का अस्य स्वार्थसिद्धिः ?

---

(२२) तस्मिन्नेव पाटलिपुत्रे प्रतिवसति ।

(२३) अमात्य ! तपोवनं गमिष्यतीति श्रूयते ।

---

(ङ) सौकार्य्यं सुसाध्यताम् ।

देवस्येति ।—येन चाणक्येन पृथिवीतलवासवस्य भूलोकेन्द्रस्य देवस्य नन्दस्य, (कर्त्तरि षष्ठी,) अग्रासनापनयजा अग्रात् श्रेष्ठात् आसनात् आड्भोजनासनात् यः अपनयः निष्काशनं तस्मात् जाता सा निकृतिः अवमानना न सोढ़ा, मनस्वी प्रशस्तमनाः अभिमानी इत्यर्थः सः अयं चाणक्यः स्वयंकृतनराधिपतेः स्वयं दत्तराज्यात् मौर्य्यात् इमां परिभूतिं कथं नु सहेत ? भूमीन्द्रकृतपराभवमपरासहिष्णोः स्वदत्तराज्यात् नृपतेः पराभवसहनं न कथमपि समुचितमित्यर्थः । अत्र नरेन्द्रशासनदण्डनिर्दिष्टानाम् मानोन्नतमध्यमदुर्बलेषु प्रकृतिवर्गेषु समानाधिकारात् सर्व्वसमन्वयमन्वये सिद्धेऽपि प्रभावोत्कर्षात् चाणक्येऽसम्बन्धद्योतनात् सम्बन्धेऽसम्बन्धरूपोऽतिशयोक्तिरलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

भागु। कुमार! न अयम् अत्यन्तदुर्बोधोऽर्थः यावत् यावत् निरपेक्षः चाणक्यहतकः चन्द्रगुप्ताद् (ढ) दूरीभवति तावत् तावत् अस्य स्वार्थसिद्धिः।

शक। अमात्य! अलम् अत्यन्तविकल्पितेन (ण)। एतत् उपपद्यत एव। कुतः? पश्यतु अमात्यः।—

राज्ञां चूड़ामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातम्?
कौटिल्यः कोपनोऽपि स्वयमभिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः ॥१२॥

राक्ष। सखे! शकटदास! एवमेतत्, तद् गच्छ, विश्रामय करभकम्।

शक। यत् आज्ञापयति अमात्य इति। [करभकेण सह निष्क्रान्तः।]

---

(ढ) निरपेक्षः अपेक्षाशून्यः उदासीन इत्यर्थः।

(ण) अत्यन्तविकल्पितेन अतिसन्देहेन।

राज्ञामिति।—मौर्य्यः चन्द्रगुप्तः राज्ञाम् अधीननृपाणां चूडामणीन्दुद्युतिखचितशिखे चूड़ायां निषक्ता ये मणयः ते इन्दव इव उज्ज्वलत्वादिति भावः, तेषां द्युतिभिः दीप्तिभिः खचिता सम्बद्धा शिखा यस्य तादृशे मूर्ध्नि शिरसि न्यस्तपादः अर्पितचरणः तेषां शासिता इत्यर्थः अतः स्वैरेव जनैः उत्पाद्यमानं क्रियमाणम् आज्ञाविघातं आज्ञाभङ्गं किमिति कथं विषहते? न कथमपीत्यर्थः। कौटिल्यः चाणक्यः कोपनोऽपि अभिचरणे अभिचारक्रियानुष्ठाने, स्वयं ज्ञातदुःखः विदितकष्टः अभिचारस्य अतीव कष्टसाध्यत्वादिति भावः। [अतिचरणे इति पाठे—प्रतिज्ञाऽपूरणे] दैवात् कथञ्चिद्भाग्येन पूर्णप्रतिज्ञः सुतराम् आयतिज्यानिभीतः आयतेः उत्तरकालिकफलस्य ज्यानेः ("कॄ गॄ ज्याम्ला" इत्यादिना क्तेः नि-आदेशः।) हानेः भीतः यदि न फलिष्यतीति आतङ्कः सन् पुनरपि प्रतिज्ञां न करोति। पूर्व्वप्रतिज्ञायाः अप्रतिपालने दुःखातिशय्यम् अनुभूय पूर्व्वप्रतिज्ञायाश्च दैवात् पूर्णत्वं मन्यमानः इदानीं दैवस्य हानिशङ्कया पुनः प्रतिज्ञां न करोतीत्याशयः। अत्र अतथ्यकल्पनामूलः निःशङ्कं चाणक्येऽज्ञानुपश्छिन्नस्य सम्भावनया व्यञ्जकशब्दाभावेऽप्युत्प्रेक्षालङ्कारः। स्रग्धरावृत्तम् ॥ १२ ॥

राक्ष। अहमपि कुमारं द्रष्टुम् इच्छामि।

मल। अहमेव आर्य्यं द्रष्टुम् आगतः।

राक्ष। [नाट्येन अवलोक्य।] अये! कुमार एव आगतः। [आसनात् उत्थाय।] इदम् आसनम्, उपवेष्टुम् अर्हति कुमारः।

मल। अहम् उपविशामि। उपविशतु आर्य्यः। [इति उभौ यथासनम् उपविष्टौ।]

मल। आर्य्य! अपि सह्या शिरोवेदना?

राक्ष। कुमारस्य अधिराजशब्देन अतिरस्कृते कुमारशब्दे, कुतः शिरोवेदनायाः सह्यता?

मल। स्वयम् उरीकृतमेतत् आर्य्येण, न दुष्प्रापं भविष्यति। तत् कियन्तं कालम् अस्माभिः एवं सम्भृतबलैः अपि शत्रुव्यसनम् अवेक्षमाणैः उदासितव्यम् (त)।

राक्ष। कुमार! कुतोऽद्यापि कालहरणस्य अवकाशः? प्रतिष्ठस्व रिपुजयाय।

मल। अमात्य! अपि किञ्चित् शत्रोर्व्यसनम् उपलब्धम्?

राक्ष। गाढ़म् उपलब्धम्।

मल। कीदृशम्?

राक्ष। सचिवव्यसनं, किम् अन्यत् व्यसनम्। अपकृष्टः चाणक्यात् चन्द्रगुप्तः।

मल। अमात्य! सचिवव्यसनम् अव्यसनमेव।

राक्ष। कुमार! अन्येषां भूपतीनां कदाचित् अमात्यव्यसनम् अव्यसनमपि स्यात्, न पुनः चन्द्रगुप्तस्य।

---

(त) उरीकृतम् अङ्गीकृतम्। शत्रुव्यसनं शत्रोः व्यसनं विपत्समयम् अवेक्षमाणैः प्रतीक्षमाणैः उदासितव्यं, तूष्णीं स्थातव्यम्।

मल। आर्य्य! ननु विशेषतः चन्द्रगुप्तस्य इति।

राक्ष। किं कारणं यत् अस्य अमात्यव्यसनम् अव्यसनम्।

मल। चन्द्रगुप्तप्रकृतीनां हि चाणक्यदोषा एव अपराग हेतवः। तस्मिन् निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतयः इदानीं पुनः सुतरामेव तत्र अनुरागं दर्शयिष्यन्ति।

राक्ष। कुमार! न एतदेवं [नैवेदम्]। इह हिप्रकाराः प्रकृतयः, चन्द्रगुप्तसहोत्थायिन्यो नन्दकुलानुरक्ताश्च। तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृतीनां चाणक्यदोषा एव विराग हेतवो, न नन्दकुलानुरक्तानाम्। तास्तु खलु नन्दकुलम् अनेन पितृकुलभूतं कृतघ्नेन घातितमिति अपराधा मर्षाभ्यां विप्रकृताः (थ) सत्यः स्वाश्रयम् अलभमानाः चन्द्रगुप्तम् एव अनुवर्त्तन्ते। त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावित शक्तिम् अभियोक्तारम् आसाद्य, क्षिप्रमेनं परित्यज्य त्वामेव आश्रयन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्।

मल। अमात्य! किमेतत् एवैकं सचिवव्यसनम् अभियोगकारणं चन्द्रगुप्तस्य? आहोस्वित् अन्यदपि अस्ति।

राक्ष। कुमार! किम् अन्यैः बहुभिरपि? एतद्धि तत्र प्रधानतमम्।

मल। अमात्य! कथं प्रधानतमं नाम? किमिदानीं चन्द्रगुप्तः स्वराज्यकार्य्यधुराम् अन्यत्र मन्त्रिणि आत्मनि वा समासज्य, स्वयं प्रतिविधातुम् असमर्थः स्यात्?

राक्ष। वाढ़म् असमर्थ एव।

मल। किं कारणम्?

---

(थ) विप्रकृताः विरक्तीकृता.

राज्ञ । स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु (द) वा भूमिपालेषु कदाचित् एतत् सम्भवति, न तु चन्द्रगुप्ते । चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धौ एव अवस्थितः चक्षुर्विकल इव अप्रत्यक्षसर्वलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ? कुतः ?—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ १३ ॥

अपिच,—

नृपोऽपकृष्टः सचिवात् तदर्पण-
स्तनन्धयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमूढधी-
र्मुहूर्त्तमप्युत्सहते न वर्त्तितुम् ॥ १४ ॥

---

(द) स्वायत्तसिद्धिषु स्वेषु न तु मन्त्रिषु आयत्ता स्थिता सिद्धिः येषां ते तथोक्तेषु स्वाधीनस्वकार्य्यचिन्तनेषु इत्यर्थः । उभयायत्तसिद्धिषु उभयोः (उभशब्दादुभयादेशः) आत्ममन्त्रिणोः आयत्ता सिद्धिः येषां तादृशेषु ।

अत्युच्छ्रिते इति ।—श्रीः राजलक्ष्मीः अत्युच्छ्रिते अत्युन्नते कार्य्यक्षमे मन्त्रिणि पार्थिवे च सति पादौ अवष्टभ्य एकैकस्मिन् एकैकं पादं स्थापयित्वा उपतिष्ठते दण्डवत् तिष्ठति, उत्तिष्ठतीत्यर्थः, ऊर्द्धोत्थाने हि अत्युन्नतावलम्बनमेव हेतुः तदन्तरा ऊर्द्धोत्थानासम्भवात् इति भावः । किन्तु सा स्त्रीस्वभावात् अक्षमत्वादित्यर्थः भरस्य उभयत्र स्थितिरूपस्य क्लेशस्य असहा अक्षमा सती तयोर्द्वयोः राजमन्त्रिणोरेकतरं जहाति त्यजति । अत्र निखिलकार्य्यक्षमायामपि राजलक्ष्म्यां क्लेशासहत्वादिसाधारणस्त्रीधर्म्मारोपणात् रूपकालङ्कारः । अत्र इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनात् उपजातिः वृत्तम् ॥ १३ ॥

नृप इति ।—स्तनन्धयः स्तनपायी अत्यन्तशिशुः स्तनादिव सचिवात् तत्प्रतिपाल्यत्वात् अपकृष्टः, तदर्पणः तस्मिन्नेव सचिवे अर्पणं राज्यभारस्येति भावः यस्य तादृशः

मल । [आत्मगतम् ।] दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि । (ध) [प्रकाशम् ।] अमात्य ! यद्यपि एवं तथापि खलु बहुषु अभियोगकारणेषु सत्सु सचिवव्यसनम् अभियुञ्जानस्य शत्रुम् अभियोक्तुः न ऐकान्तिकी सिद्धिर्भवति ।

राक्ष । ऐकान्तिकीमेव सिद्धिम् अवगन्तुम् अर्हति कुमारः । कुतः ?—

त्वय्युत्कृष्टबले, ऽभियोक्तरि नृपे, नन्दानुरक्ते पुरे,
चाणक्ये चलिताधिकारविमुखे, मौर्य्ये नवे राजनि ।
स्वाधीने मयि—" [इत्यर्द्धोक्ते लज्जा नाट्यम् ।]
"—मार्गमात्रकथनव्यापारयोगोद्यमे,
त्वद्वाञ्छान्तरितानि सम्प्रति विभो ! तिष्ठन्ति साध्यानि नः ॥१५॥

---

मया न दृष्टः लोकव्यवहारः येन मूढा धीर्यस्य तथोक्तः नृपः मुहूर्त्तमपि अल्पक्षणमपि वर्त्तितुं स्थातुं व्यवहर्त्तुं वा न उत्सहते न समर्थो भवति । वंशस्थविलं वृत्तम् ॥ १४ ॥

(ध) सचिवस्य मन्त्रिणः आयत्तम् अधीनं तन्त्रं राज्यचिन्ता यस्य । अहं यत् तथाभूतो न, तत् दिष्ट्या भाग्येन एव इत्यर्थः ।

त्वयीति ।—हे विभो ! उत्कृष्टबले उत्तमसामर्थ्ये समर्थसैन्ये च नृपे त्वयि अभियोक्तरि योद्धुमुद्यते, तथा पुरे नगरे नन्दानुरक्ते, तथा चाणक्ये चलिताधिकारविमुखे चलितः अधिकारः राज्यचिन्ताभारः यस्मात् तस्मिन् अधिकारच्युते इत्यर्थः अत एव विमुखे पराङ्मुखे, तथा मौर्य्ये चन्द्रगुप्ते नवे अनभिज्ञे इत्यर्थः राजनि, तथा मार्गमात्रकथनव्यापारयोगोद्यमे मार्गमात्रस्य युद्धपथमात्रस्य कथनरूपव्यापारस्य योगः कौशलं तस्मिन् उद्यमो यस्य तादृशे स्वाधीने त्वन्मात्राधीने तव वशीभूते इत्यर्थः मयि सति सम्प्रति नः अस्माकं साध्यानि कार्य्याणि अभीष्टानीति शेषः त्वद्वाञ्छान्तरितानि तव वाञ्छा एव अन्तरिता व्यवधानकारिणी येषां तादृशानि त्वद्वाञ्छापेक्षा-

मल । अमात्य ! यदि एवम् अभियोगकालम् अमात्यः पश्यति, तत् किम् आस्यते ? पश्य,—

उत्तुङ्गास्तुङ्गकूलं स्नुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम् ।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥ १६ ॥

अपिच,—

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्रम्
आसारवर्षमिव शीकरमुद्गिरन्त्यः ।

---

[illegible] तिष्ठन्ति । अत मयीति आत्मनः स्वाधीनत्वकथनद्वारा आत्मनो गर्वः स्यात् इत्याशङ्क्य लज्जा प्रदर्शिता । शार्दूलविक्रीडितं वृत्तम ॥ १५ ॥

वैरिपुरमर्द्दनाय प्रस्थानस्योचितत्वेऽपि केन कस्याक्रमणं विधेयमिति दर्शयितुं तुल्यरूपेण तुल्यरूपस्यैवाक्रमणमुचितमित्यत्र तुल्यविशेषणान्वितस्य शोणनदस्य तत्तुल्य मदगजपतिभिरेवाक्रमणं करिष्यते इत्याह उत्तुङ्गा इति ।—उत्तुङ्गाः अत्युन्नताः स्नुतमदसलिलाः मदजलस्राविणः श्यामाः कृष्णवर्णाः अलिमुखराः अलिभिर्भ्रमरैः मदगन्धलुब्धैरिति भावः मुखराः झङ्कारवन्तः उरुदशनैः वृहद्दन्तैः उत्सादितं विध्वंसितं तटं यैः तादृशाः सिन्दूरशोणाः सिन्दूरेण शोणाः मदस्रावकाले गजानां शरीरे रक्तवर्णानि चिह्नानि भवन्तीति पाठकाश्च द्रष्टव्यम । ते शोणाः रक्तवर्णा वा मम शतशः गजपतयः तुङ्गकूलम् उन्नततटं प्रस्यन्दिसलिलं प्रवहमाणजलं श्यामा उपकण्ठवर्त्तिनो द्रुमाः यस्य यस्य तादृशं कल्लोलमुखरं कल्लोलैः तरङ्गैः मुखरं महाशब्दयुतं स्रोतःखातावसीदत्तटं स्रोतसा प्रवाहेण खातं अत एव अवसीदत् पतत् तटं यस्य तथाभूतं शोणं पाटलिपुत्रवर्त्ति-नदविशेषं पास्यन्ति पानेन शोषयिष्यन्तीत्यर्थः तुल्यरूपत्वात् अभिभविष्यन्तीत्यर्थो वा । सुवदना वृत्तम् "ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना" इति लक्षणात् ॥१६॥

इदानीं शत्रुपुररोधनं दर्शयति गम्भीरेति ।—गम्भीरगर्जितरवाः धीरगर्ज्जनध्वनयः स्वमदाम्बुमिश्रं निजदानवारियुक्तम् आसारवर्षं धारासम्पातमिव शीकरम् जलकणान् उद्गि-

विन्ध्यं विकीर्णसलिलाइव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीया: ॥ १७ ॥

[ इति भागुरायणेन सह निष्क्रान्तो मलयकेतु: । ]

राक्ष । क: कोऽत्र भो: ?

[प्रविश्य पुरुष: । ] आणवेदु अमच्चो (२४) !

राक्ष । प्रियंवदक ! ज्ञायतां सांवत्सरिकाणां (न) द्वारि क: तिष्ठति ।

प्रियं । जं अमच्चो आणवेदि त्ति । [ निष्क्रम्य क्षपणकं दृष्ट्वा पुन: प्रविश्य च ।] अमच्च ! एसो क्खु संवत्सरिओ क्खवणओ (२५) ।

राक्ष । [ स्वगतम् अनिमित्तं सूचयित्वा । ] कथं प्रथममेव क्षपणकदर्शनम् ?

प्रियं । जीवसिद्धी (२६) ।

राक्ष । [ प्रकाशम् ] । अबीभत्सदर्शनं (प) कारयित्वा, प्रवेशय ।

प्रियं । जं अमच्चो आणवेदि (२७) ।

[ इति निष्क्रान्त: ] ।

---

(२४) आज्ञापयतु अमात्य: ।

(२५) यत् अमात्य: आज्ञापयतीति । अमात्य ! एष खलु सांवत्सरिक: क्षपणक: ।

(२६) जीवसिद्धि: ।

(२७) यद् अमात्य आज्ञापयति ।

---

अन्वय: उद्गमन्त्य: विकीर्णसलिला: विक्षिप्तजला मेघमाला: जलदपङ्क्तय इव मदीया वारणघटा: गजसङ्घा: विन्ध्यमिव नगरं शत्रुपुरं रोत्स्यन्ति । वसन्ततिलकं वृत्तम् ॥१७॥

(न) सांवत्सरिकाणां ज्योतिषिकाणाम् ।

(प) अबीभत्सदर्शनम् अकुत्सितदर्शनं तस्य नग्नत्वात् कन्थाकौपीनादिधारित्वाद् वा इति भाव: ।

[ ततः प्रविशति क्षपणकः। ]

क्षप।

सासणमलिहन्ताणं पडिवज्जह, मोहवाहिवेज्जाणं।
जे पढममेत्तकडुअं, पच्छा पत्थं उवदिसन्ति ॥१८॥

[उपसृत्य।] धम्मलाहो सावका! भोदु। (२८)

राक्ष। भदन्त! (फ) निरूप्यतां, तावत् अस्माकं प्रस्थान-योग्यदिवसः।

क्षप। [नाट्येन चिन्तयित्वा।] सावका! णिरूविदे मुहुत्ते। आमज्झह्नादो णिव्वुत्तसत्तसकला सोहणा तिही, संपुण्णचन्दा पुण्णमासी, तुह्माणं उत्तलाए दिसाए दक्खिणां दिसं पत्थिदाणं दक्खिणदुवालिओ णक्खत्तओ (ब)।

(२८) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम्।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति ॥
धर्मलाभः उपासक! भवतु।

(२९) उपासक! निरूपितो मुहूर्त्तः। आ मध्याह्नात् निवृत्तसप्तशकला शोभना तिथिः सम्पूर्णचन्द्रा पौर्णमासी, युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानां दक्षिण-द्वारिकं नक्षत्रम्।

शासनमिति।—मोहव्याधिवैद्यानां मोहः अज्ञानं स एव व्याधिः तस्य वैद्याः चिकित्सकाः ज्ञानदानेन निरासकाः तेषाम् अर्हतां मान्यानां बौद्धविशेषाणाञ्च शासनम् आदेशं प्रतिपद्यध्वं प्रतिपालयत इत्यर्थः। ये अर्हन्तः प्रथममात्रकटुकं प्रथममेव कटुकम् अप्रीतिकरत्वादिति भावः पश्चात् पथ्यं परिणामहितम् उपदिशन्ति शिक्षयन्ति ॥१८॥

(फ) भदन्त इति बौद्धसन्यासिनः सम्बुद्धिः, मान्य! इत्यर्थः।

(ब) आ मध्याह्नात् मध्याह्नकालमारभ्य निवृत्तं सप्तशकलं विष्टिभद्राख्यं सप्तमतिथि-खण्डं यस्याः "पूर्वे पूर्णाष्टमी शुक्ले" इत्युक्तेः पौर्णमास्यां एव विष्टिभद्राख्यं सप्तमतिथि-

अवि अ,—

अत्थाहिमुहे सूले, उदिदे संपुसमण्डले चन्दे।
गमणं (अस्से) बुहस्स लग्गे, उदिदत्थमिदे अ केदुम्मि (२८)॥१८॥

---

अपिच,—

अस्ताभिमुखे सूरे, उदिते सम्पूर्णमण्डले चन्द्रे।
गमनं (अस्मिन्) बुधस्य लग्ने, उदितास्तमिते च केतौ॥

---

खण्डं करण: प्रवर्त्तते तस्मात् मध्याह्नं प्राप्यैव निवृत्तमिति "न गच्छेद्विष्टिभद्रायाम्" इति निषेधात् तदभावेन शोभनता। सा सम्पूर्णचन्द्रा पौर्णमासी शोभना तिथि: उत्तरस्या दिश: दक्षिणां दिशं प्रस्थितानां युष्माकं दक्षिणद्वारिकं दक्षिणदिग्वर्त्ति नक्षत्रं "कृत्तिकाद्यास्तु पूर्व्वादौ सप्तसप्तोदिता: क्रमात्" इत्युक्त: मघादिसप्तकम्। प्रकृते पौर्णमास्यास्तिथेर्मघादिनक्षत्राणाञ्च अयाविकत्वात् तत्र गमने अमङ्गलं, पाटलिपुत्रस्य तत्स्थानत: दक्षिणदिक्स्थितत्वात् यमभवनं गन्तव्यमिति च व्यज्यते।

एवं तिथिनक्षत्रे उक्त्वा यात्रासमयमाह—अस्ताभिमुखे इत्यादि। सूरे सूर्य्ये अस्ताभिमुखे "अपराह्ले वर्ज्जयाम्याम्" इत्युक्ते: तथोक्तम्। एवं समयमुक्त्वा लग्नबलमाह—उदिते इति। उदिते लग्ने सम्पूर्णमण्डले "अर्द्धेनेन्दर्कसौराराः" इत्यनेन अर्द्धचन्द्रस्य पापग्रहत्वोक्ते: तत्परीहाराय सम्पूर्णमण्डले इत्युक्तम्। किञ्च पौर्णमास्यां चन्द्रस्य सम्पूर्णत्वस्यैव सम्भवात् तथोक्तम्। इदानीं लग्नविशेषमाह।—बुधस्य बुधस्वामिके लग्ने राशौ, कन्यालग्ने इत्यर्थात् तस्यैव दक्षिणाश्रयतया दक्षिणदिग्गमने प्राशस्त्यात् यद्यपि "कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रारवनीभुजाम्। जीवार्कभानुजेज्यानां चेत्राणि स्युरजादय:"॥ इत्युक्ते मिथुनराशेरपि बुधस्वामिकत्वं तथापि लग्नस्थचन्द्राश्रित तद्राशिघटकमृगापरार्द्धार्द्रापुनर्व्वसुपादत्रिकाणां प्रागाश्रवचनात् दक्षिणाश्रयत्वाभावेन न तद्ग्रहणम्। तत्र दोषराहित्यमाह।—केतौ केतुग्रहे च उदितास्तमिते उदितात् लग्नात् अस्तमिते सप्तमस्थाने स्थिते सति। "नेष्टा: शुक्रदिवाकरार्कतनयाराहुस्तथा भूमिज: क्षिप्रं शत्रुवशं नयन्ति पुरुषं स्थाने स्थिता: सप्तमे" इत्यनेन शुक्रादीनामेव सप्तमस्थाने अरिष्टदायकत्वोक्ते: तद्भिन्नानां शुभत्वम् अथ च शूरे वीरे प्रकृते राक्षसे अस्ताभिमुखे विनाशाभिमुखे, चन्द्रे चन्द्रगुप्ते, सम्पूर्णमण्डले समग्रप्रकृतिमण्डले उदिते उत्थिते सति बुधस्य चाणक्यस्य लग्ने तदनुचराश्रयाद्दृढलग्ने केतौ मलयकेतौ गमनं तद्वृत्तिगमनं उदितेऽप्यस्तमिते

राक्ष। भदन्त! तिथिरेव तावत् न शुध्यति। (भ)

क्षप। सावका!

एक्कगुणा होइ तिही, चउग्गुणे होइ णक्खत्ते।
चउसट्ठिगुणे लग्गे, एसे दीसदि जोइससिद्धंते ॥२०॥
लग्गे होइ सुलग्गे, कूलग्गहं पलिहलिज्जासु।
पाविहि दीहं लाहं चन्दस्स बलेण गच्छन्ते (३०) ॥२१॥



(३०) उपासक!

एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम्।
चतुःषष्टिगुणं लग्नम्, एतत् दृश्यते ज्योतिषसिद्धान्ते ॥
लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर आशु।
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन् ॥

आसन्नपतनत्वात् भाविनि भूतवदुपचारः अस्तमयाय इत्यर्थः। [पाठान्तरे—अस्मिन् मुहूर्त्ते बुधस्य लग्ने इत्यर्थः गमनमित्यध्याहारः] ॥ १९ ॥

(भ) न शुध्यति "षष्ठ्यष्टमीद्वादशीषु न गच्छेच्चिदिनस्पृशि। पूर्णिमा प्रतिपद्दर्शरिक्तावमदिनेषु च" ॥ इति ज्योतिषनिषेधात्।

"तिथिरेकगुणा प्रोक्ता नक्षत्रन्तु चतुर्गुणम्" इत्युपक्रम्य "सहस्रेणाधिकः सूर्य्यः चन्द्रो लक्षगुणाधिकः" इति ज्योतिषतत्त्वोक्तेः चन्द्रबलस्यैव प्रबलत्वात् तद्बलं दर्शयितुमाह एकगुणेति।—तिथिः एकगुणा भवति शुभाशुभयोरस्या अल्पशक्तित्वात्, नक्षत्रं चतुर्गुणं भवति तिथ्यपेक्षया अस्य चतुर्गुणफलदायकत्वात्, लग्नं चतुःषष्टिगुणं तिथ्यपेक्षया अस्य तद्गुणफलप्रदत्वात्। ज्योतिषसिद्धान्ते एतत् दृश्यते ॥ २० ॥

लग्नमिति।—किञ्च, लग्नं निकृष्टमपि सुलग्नं शुभदं भवति; तत्र हेतुः आशु शीघ्रं क्रूरग्रहं मन्दग्रहयोगं परिहर परित्यज, क्रूरग्रहयोगाभावे दोषराहित्यात् लग्नं शुभदं भवतीत्यर्थः। प्रकृते हे क्रूर! हे राक्षस! एवम् आग्रहं चाणक्यपराभवे यत्नं परिहर। तत्रानुगुणं योगमाह—बलेनेति। चन्द्रस्य बलेन गच्छन् दीर्घं महान्तं लाभं प्राप्नुहि। "तारासत्र न गच्छन्ति यत्र चन्द्रो बलान्वितः" "शुभे चन्द्रे प्रयास्यन्ति इत्या

राक्ष। भदन्त! अपरैः सांवत्सरिकैः सार्द्धं संवाद्यताम् (म)।

क्षप। संवादेदु सावके। अहं णिअं गेहं गमिस्सं (३१)।

राक्ष। न खलु कुपितो भदन्तः।

क्षप। ण कुविदे तुह्माणं भदन्ते (३२)।

राक्ष। कः तर्हि?

क्षप। भअवं कदन्ते। जेण अत्तणो पक्खं उज्झिअ परपक्खं (य) प्पमाणीकलेसि (३३)।

[इति निष्क्रान्तः क्षपणकः।]

राक्ष। प्रियंवदक! ज्ञायतां का वेला वर्त्तते इति।

प्रियं। जं अमच्चो आणवेदि त्ति। [निष्क्रम्य पुनः प्रविश्य च।] अत्थाहिलासी भअवं सूले (३४)।

राक्ष। [आसनात् उत्थाय विलोक्य च।] अये! अस्ताभिलाषी भगवान् सहस्रदीधितिः। तथाहि,—

(३१) संवादयतु उपासकः। अहं निजं गेहं गमिष्यामि।

(३२) न कुपितो युष्माकं भदन्तः।

(३३) भगवान् कृतान्तः। येन आत्मनः पक्षमुज्झित्वा परपक्षं प्रमाणीकरोषि।

(३४) यत् अमात्य आज्ञापयतीति। अस्ताभिलाषी भगवान् सूर्यः।

वञ्चिता इव"। "सहस्रेणाधिकः सूर्यः चन्द्रो लक्षगुणाधिकः" इत्यादि वचनेन चन्द्रबलस्यैव प्राबल्यात्। प्रकृते चन्द्रस्य चन्द्रगुप्तस्य बलेन सैन्येन सह गच्छन् त्वं दीर्घलाभं विपरीतलक्षणया मृत्युरूपं लाभं प्राप्स्यसि इति ध्वनिः॥२१॥

(म) संवाद्यतां सम्मेलनं क्रियताम्।

(य) परपक्षं परस्य शत्रोः पक्षं मामित्यर्थः।

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा।
एते तस्मिन् निवृत्ताः पुनरितरककुप्प्रान्तपर्यस्तबिम्बे
प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ॥२२॥

[ इति निष्क्रान्ताः सर्वे। ]

इति चतुर्थोऽङ्कः।

---

# पञ्चमोऽङ्कः।

[ ततः प्रविशति लेखमलङ्करणस्थगिकाञ्च
समुद्रामादाय सिद्धार्थकः। ]

सिद्धा। हीमाणहे! हीमाणहे!!—
बुद्धिजलणिज्झरेहिं सिच्चन्ती देसकालकलसेहिं।
दंसइस्सदि अज्ज फलं गुरुअं चाणक्कणीदिलदा ॥ १ ॥

---

(१) आश्चर्यम्! आश्चर्यम्!—
बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः।
दर्शयिष्यति अद्य फलं गुरुकं चाणक्यनीतिलता ॥

---

आविर्भूतानुराग इति।—उदयगिरेः उदयाचलात् उज्जिहानस्य उद्गच्छतः भानोः सूर्यस्य सम्बन्धविवक्षया षष्ठी, क्षणं व्याप्य आविर्भूतः अनुरागः अनुरक्तिः तुल्यवर्णता च येषां ते उपवनतरवः आरामवृक्षाः [अत्र तरुषु भृत्यत्वारोपः] पत्रच्छायैः उपलक्षिताः सन्तः पुरस्तात् दूरं गत्वा तस्मिन् सूर्ये पुनः इतरककुप्प्रान्तपर्यस्तबिम्बे पश्चिमदिक्प्रान्तप्रस्रुत-मण्डले सति, आशु शीघ्रमेव न तु कालप्रतीक्षणं कर्त्तव्यर्थः निवृत्ताः। तथाहि, सेवमाना भृत्याः प्रचलितविभवं सम्पद्विहीनं स्वामिनं प्रायः बाहुल्येन त्यजन्ति। सामान्येन विशेष-समर्थनरूपोऽयमर्थान्तरन्यासः, स च उत्प्रेक्षया अनुप्राणितः। स्रग्धरा वृत्तम् ॥ २२ ॥

बुद्धीति।—देशाः कालाश्च कलसाः कुम्भा इव येषां तादृशैः बुद्धिजलनिर्झरैः बुद्धय:

गहीदो मए अज्ज चाणक्केण पढ़मलेहिदो लेहो, अमच्च-रक्खसस्स मुद्दालंच्छिदो। तस्स ज्जेव्व मुद्दालंच्छिदा इअं आह-रणपेड़िआ। चलिदोह्मि पाड़लिउत्तं, ता जाव गच्छह्मि। [परिक्रम्य अवलोक्य च।] कहं क्खवणओ आअच्छदि? ता जाव मे असउणभूदं (क) इमस्स दंसणं, ता आदिच्चदंसणेण पड़िहणामि। (१)

[ततः प्रविशति क्षपणकः।]

क्षप। अलिहन्ताणं पणमामो, जे दे गंभीलदाए बुद्धीए।
लोउत्तलेहिं लोए सिद्धिं मग्गेहिं मग्गन्ति (२)॥ २॥

---

गृहीतो मया आर्य्यचाणक्येन प्रथमलिखितो लेखः, अमात्यराक्षसस्य मुद्रालाञ्छितः। तस्यैव मुद्रालाञ्छिता इयम् आभरणपेटिका। चलितोऽस्मि पाटलिपुत्रं, तद् यावत् गच्छामि। कथं क्षपणकः आगच्छति? तद् यावन्मे अशकुनमूलमिमस्य दर्शनं, तस्मादादित्यदर्शनेन प्रतिहन्मि।

(२) अर्हतां प्रणमामो ये ते गम्भीरतया बुद्धेः।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्मार्गयन्ति॥

---

जलानीव तेषां निर्भरैः निषेकैः सिच्यमाना आर्द्रीक्रियमाणा चाणक्यनीतिलता चाणक्यस्य नीतिः लता इव अद्य गुरुकं महत् फलं दर्शयिष्यति, उपयुक्ते देशे काले च बुद्धिपूर्वक-कार्य्यकरणे अवश्यमेव फलोत्पत्तिरिति भावः॥ १॥

(क) अशकुनभूतम् अमङ्गलमूलम्।

अर्हतामिति।—अर्हतां प्रशस्यानाम् "अर्हः प्रशंसायाम्" इति शब्दः, गुरु-जनानामित्यर्थः बौद्धभेदानाञ्च कर्मणि षष्ठी, प्रणमामः; ये ते अर्हन्तः बुद्धेः गम्भीरतया धीरतया सुधीरया बुद्ध्या इत्यर्थः लोके जगति लोकोत्तरैः अलौकिकैः मार्गैः उपायैः सिद्धिं कार्य्यस्य इति शेषः मार्गयन्ति अन्विच्छन्ति॥ २॥

सिद्धा। भदन्त! पणमामि। (३)

चप। सावका! धम्मलाहो दे होदु। [ सिद्धार्थकं निर्वर्ण्य।] सावका! समुद्दसन्तलणकिदव्ववसाअं (ख) विअ दे हिअअं पेक्खामि। (४)

सिद्धा। कहं भदन्तो जाणादि ? (५)

चप। सावका! किं एत्थ जाणिदव्वं ? णं एसो ज्जेव दे मग्गणाओकण्णधारो(ग)लेहो सूचेदि। (६)

सिद्धा। जाणिदं भदन्तेण देसन्तलं चलिदोह्मि। ता कधेदु भदन्तो कीदिसो अज्ज दिअसो ? (७)

चप। [विहस्य।] सावका! मुण्डं मुण्डिअ तुमं णक्खत्ताणि पुच्छसि ? (८)

सिद्धा। भदन्त! सम्पदं पि किं जादं ता कधेहि। जदि

---

(३) भदन्त! प्रणमामि।

(४) उपासक! धर्मलाभस्ते भवतु। उपासक! समुद्रसन्तरणकृतव्यवसायमिव ते हृदयं पश्यामि।

(५) कथं भदन्तो जानाति ?

(६) उपासक! किमत्र ज्ञातव्यम् ? ननु एष एव ते मार्गनौकर्णधारो लेखः सूचयति।

(७) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि। तत् कथयतु भदन्त! कीदृशोऽद्य दिवसः ?

(८) उपासक! मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि ?

---

(ख) समुद्रसन्तरणकृतव्यवसायं समुद्रपारगमने कृतोद्योगं दुष्करकार्य्यकरणोद्यतमित्यर्थः।

(ग) मार्गनौकर्णधारः मार्गः पन्थाः स एव नौः तत्र कर्णधारः नाविक इव, अस्य लेखस्य पारकरणसामर्थ्यमस्तीति द्योत्यते। "एसो दे मग्गादेसकुसलो सउणो करदलगदो लेहो च" इति क्वचित् पाठः। तत्र—"एष ते मार्गादेशकुशलः शकुनः करतलगतो लेखश्च" इति सं। शकुनः यात्राकालिकलक्षणविशेषः। अन्यत् पूर्व्ववत्।

अत्तणो अणुजलं भविस्सदि ता गमिस्सं, अस्सधा णिवत्तिस्सं। (९)

क्षप। सावकाणं सम्पदं एदस्सिं मलयकेदुकडए (घ) अणुऊलेण अणणुऊलेण वा, अगहिदमुद्दो ण गच्छोअदि। (१०)

सिद्धा। भदन्त! कहेहि कुदो क्खु अअं? (११)

क्षप। सावका! णिसामेहि, पढ़मं दाव एत्थ मलअकेदुकड़ए लोअस्स अणिवालिअणिक्कमणप्पवेसो आसी। दाणीं इदो पच्चासणे कुसुमउरे, ण कोवि अमुद्दालंञ्छिदो णिक्कमिदुं प्पविसिदुं वा अणुमोदीअदि। ता जदि भागुरायणस्स मुद्दालंञ्छिदोसि, तदो गच्छ वीसत्थो, अस्सधा णिव्वत्तिअ णिउक्कण्ठं चिट्ठ। मा तुमं गुम्मट्ठाणाधिवेहिं (ङ) संजमिदकलचलणो राअउलं प्पवेसीअसि।(१२)

---

(९) भदन्त! साम्प्रतमपि किं जातं तत् कथय। यदि आत्मनः अनुकूलं भवेत् तदा गमिष्यामि, अन्यथा निवर्त्तिष्ये।

(१०) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके अनुकूलेन अननुकूलेन वा, अगृहीतमुद्रो न गच्छति।

(११) भदन्त! कथय कुतः खलु अयम्?

(१२) उपासक! निशामय, प्रथमं तावदत्र मलयकेतुकटके लोकस्यानिवारितनिष्क्रमणप्रवेश आसीत्। इदानीम् इतः प्रत्यासन्ने कुसुमपुरे, न कोऽपि अमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमोद्यते। तत् यदि भागुरायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्तः, अन्यथा निवृत्य निरुत्कण्ठं तिष्ठ। मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेश्यसे।

---

(घ) मलयकेतुकटके मलयकेतोः कटके शिविरे।

(ङ) गुल्मस्थानाधिपैः गुल्मस्थानं रक्षास्थानविशेषः प्रहरिणामावास इत्यर्थः घाटीति प्रसिद्धम्, तदधिपैः तदध्यक्षैः।

सिद्धा। किं ण जाणादि भदन्तो ! जधा अमच्चरक्खसस्स केलिअरो अन्तिओ (च) [ सण्णिहिदो ] सिद्धत्थओ अहं त्ति। ता अमुद्दालंच्छिदं पि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं ? (१३)

च्चप। सावका ! रक्खसस्स पिसाचस्स वा केलिअरो होहि। णत्थि उण दे अमुद्दालंच्छिदस्स णिक्कमणोवाओ। (१४)

सिद्धा। भदन्त ! ण कुप्प, भण मे कज्जसिद्धी होदु त्ति। (१५)

च्चप। सावका ! गच्छ होदु दे कज्जसिद्धी। अहं पि भागुराअणादो पाडलिउत्तं गन्तुं मुद्दं पडिच्छेमि। (१६) (छ)

[ इति उभौ निष्क्रान्तौ। प्रवेशकः (ज)। ]

---

(१३) किं न जानाति भदन्तः ! यथा अमात्यराचसस्य केलिकरः अन्तिकः (सन्निहितः) सिद्धार्थकोऽहमिति। तद् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ?

(१४) उपासक ! राचसस्य पिशाचस्य वा केलिकरो भव। नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः।

(१५) भदन्त ! न कुप्य, भण मे कार्य्यसिद्धिर्भवतु इति।

(१६) उपासक ! गच्छ, भवतु ते कार्य्यसिद्धिः। अहमपि भागुरायणात् पाटलिपुत्रं गन्तुं मुद्रां प्रतीच्छामि।

---

(च) अन्तिकः सन्निधानवर्त्ती पार्श्वचर इत्यर्थः।

(छ) प्रतीच्छामि गृह्णामि।

(ज) प्रवेशक इति 'वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः॥' इत्युक्तलक्षणः। अत्र वृत्तस्य प्रथमाङ्के चाणक्येन लेखितपत्रवृत्तान्तस्य तथा वर्त्तिष्यमाणस्य भागुरायणसकाशात् मुद्राग्रहणादिवृत्तान्तादेः कथांशस्य सूचनात् तथात्वमिति बोध्यम्।

[ ततः प्रविशति पुरुषेण अनुगम्यमानो भागुरायणः । ]

भागु । [ आत्मगतम् । ] अहो ! विचित्रता आर्य्यचाणक्य-नीतेः । कुतः ?—

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहुः सम्पूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशतः ।
मुहुर्भ्रश्यद्बीजा, मुहुरपि बहुप्रापितफले-
त्यहो ! चित्राकारा नियतिरिव नीतिर्नयविदः ॥३॥

[ प्रकाशम् । ] भद्र ! भासुरक ! न मां दूरीभवन्तमिच्छति कुमारः । अतोऽस्मिन् एव आस्थानमण्डपे विन्यस्यताम् आसनम् ।

पुरुषः । एदं आसणं, उपविसदु अज्जो । (१७)

भागु । [उपविश्य ।] भद्र ! भासुरक ! यः कश्चित् मुद्रार्थी मां द्रष्टुम् इच्छति, स त्वया प्रवेशयितव्यः ।

पुरु । जं अज्जो आणवेदि त्ति । (१८)

[ निष्क्रान्तः । ]

---

(१७) एतदासनम्, उपविशतु आर्य्यः ।

(१८) यत् आर्य्य आज्ञापयतीति ।

---

मुहुरिति ।—नयविदः नीतिज्ञस्य नीतिः नियतिः दैवमिव चित्राकारा विचित्रस्वरूपा अहो इति आश्चर्य्ये । तथाहि, कार्य्यवशतः कार्य्यविशेषमुद्दिश्य प्रयोजनवशादित्यर्थः मुहुः वार वारं कदाचिदित्यर्थः लक्ष्योद्भेदा लक्ष्यः अनुमेयः उद्भेदः प्रकाशो यस्याः सा, लक्ष्यस्य उद्देश्यस्य उद्भेदः सामान्यतः प्रकाशो यस्यां सा इति वा, मुहुः अधिगमाभावेन गहना दुर्बोधा इत्यर्थः, मुहुः सम्पूर्णाङ्गी सम्पूर्णानि अङ्गानि अवयवा यस्याः तादृशी, मुहुः अतिकृशा अल्पमात्रबोधगम्या इत्यर्थः, मुहुः भ्रश्यद्बीजा भ्रश्यत् नश्यत् बीजं कारणं यस्याः तथाभूता, मुहुरपि बहुप्रापितफला बहु प्रचुरं यथा तथा प्रापितं फलं यया तथोक्ता ! भाग्यस्य यथा फलेनैव ज्ञेयता एवं नीतेरपि फलेनैव ज्ञेयतेति भावः । शिखरिणी वृत्तम् ॥ ३ ॥

भागु [ स्वगतम् । ] कष्टम् एवमपि नाम अयम् अस्मासु स्नेहवान् कुमारो मलयकेतुरिति सन्धातव्यः ( झ ) इति अहो दुष्करम् । अथवा,—

कुले, लज्जायां च, स्वयशसि च, माने च, विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति ।
तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति ॥४॥

[ ततः प्रविशति प्रतीहार्य्यनुगतो मलयकेतुः । ]

मल । [स्वगतम् ।] अहो ! राक्षसं प्रति मे विकल्पबाहुल्यात् आकुला (ञ) बुद्धिर्न निश्चयम् अधिगच्छति । कुतः ?—

भक्त्या नन्दकुलानुरागदृढ़या नन्दान्वयालम्बिना
किं चाणक्यनिराकृतेन कृतिना मौर्य्येण सन्धास्यते ।
स्थैर्य्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवेत्
इत्यारूढ़कुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥५॥

[ प्रकाशम् । ] विजये ! क्व भागुरायणः ?

---

(झ) सन्धातव्यः प्रतारणीयः ।

कुले इति ।—परतन्त्रः पराधीनो जनः कुले वंशे लज्जायां स्वयशसि माने च च विमुखः सन् क्षणिकधनलाभात् क्षणिकधनप्रत्याशया नश्वरवित्तलाभमुद्दिश्येति भावः धनवति धनस्वामिनि शरीरं विक्रीय तदाज्ञां कुर्वाणः प्रतिपालयन् सुतरां विचारातिक्रान्तः सदसद्विचारकरणे अप्राप्तावसरः अधुना एतत् हितम् एतत् अहितमिति युक्तायुक्तमित्यर्थः किमिति कथं विमृशति चिन्तयति ? धनतृष्णया शरीरस्य विक्रयेण अस्वाधीनत्वात् न विवेचनाधिकार इति भावः । शिखरिणी वृत्तम् ॥ ४ ॥

(ञ) विकल्पबाहुल्यात् सन्देहप्राचुर्य्यात् ।

भक्त्या इति ।—नन्दकुलानुरागदृढ़या नन्दकुले यः अनुरागः तेन दृढ़या प्रगाढ़या भक्त्या चाणक्यनिराकृतेन नन्दान्वयालम्बिना नन्दवंशीयेन कृतिना मौर्य्येण चन्द्रगुप्तेन

प्रतीहारी। कुमार! एसो क्खु कड़आदो णिक्कमिदुकामस्स मुद्दासम्पदानाधिआरे चिट्ठदि। (१९)

मल। विजये! मुहूर्त्तं निभृतपदसञ्चाराभव, यावत् अस्य पराङ्मुखस्य एव पाणिभ्यां नयने पिदधामि।

प्रती। जं कुमारो आणवेदि। (२०)

[प्रविश्य भासुरकः।] अज्ज! एसो क्खु क्खवणओ मुद्दाणिमित्तं अज्जं पेक्खिदुमिच्छदि। (२१)

भागु। प्रवेशय।

भासु। जं अज्जो आणवेदि त्ति। (२२)

[निष्क्रान्तः।]

[प्रविश्य क्षपणकः।] सावकाणं धम्मविड्ढी होदु। (२३)

भागु। [नाट्येन अवलोक्य स्वगतम्।] अये! राक्षसस्य

---

(१९) कुमार! एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदानाधिकारे तिष्ठति।

(२०) यत् कुमार आज्ञापयति।

(२१) आर्य्य! एष खलु क्षपणको मुद्रानिमित्तम् आर्य्यं प्रेक्षितुमिच्छति।

(२२) यत् आर्य्य आज्ञापयतीति।

(२३) उपासकानां धर्मवृद्धिः भवतु।

---

सहेत्यर्थः किं सम्भाव्यते सङ्गंस्यते राक्षस इति शेषः, अथवा भक्तिगुणस्य ममेति शेषः स्थैर्य्यं दाक्ष्यं विगणयन् किं सत्यसन्धः सत्यप्रतिज्ञः भवेत् अहं मौर्य्यं जित्वा तुभ्यं समग्रं मगधराज्यं दास्यामीति या प्रतिज्ञा कृता तां सफलयेदिति मे मनः आरूढकुलालचक्रं कुम्भकारचक्रोपरिस्थितमिव चिरं भ्राम्यति सन्दिग्धे इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥ ५॥

मित्रं. जीवसिद्धिः। [प्रकाशम्।] भदन्त! न खलु (ट) राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते ?

क्षप। [कर्णौ पिधाय।] सन्तं पावं, सन्तं पावं, सावका! तहिं ज्जेव गमिस्सं, जहिं रक्खसस्स पिसाचस्स वा णामं पि ण सुणीअदि। (२४)

भागु। भदन्त! बलीयांस्ते सुहृदि प्रणयकोपः। तत् किम् अपराद्धं राक्षसेन भदन्तस्य ?

क्षप। सावका! ण मम किं पि रक्खसेण अवलद्धं, सअं ज्जेव मन्दभाओ अत्तणो णं [अवलद्धामि] [कम्मसु लज्जामि।]। (२५)

भागु। भदन्त! वर्द्धयसि मे कुतूहलम्।

मल। [स्वगतम्।] मम च।

भागु। श्रोतुम् इच्छामि।

मल। [स्वगतम्] अहमपि।

क्षप। सावका! किं एदिणा [असुणिदव्वेण] सुणिदेण (२६)।

भागु। भदन्त! यदि रहस्यं, तदा तिष्ठतु।

क्षप। सावका! ण हि रहस्सं (२७)।

---

(२४) शान्तं पापं, शान्तं पापम्। उपासक! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।

(२५) उपासक! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य आत्मनो ननु अपराध्यामि। पाठान्तरे—आत्मनो ननु कर्मसु लज्जे।

(२६) उपासक! किमेतेन (अश्रोतव्येन) श्रुतेन।

(२७) उपासक! न हि रहस्यम्।

---

(ट) न खलु इति प्रश्नार्थमव्ययम्।

भागु। तर्हि कथ्यताम्।

क्षप। सावका! णत्थि एदं, तधावि ण कधइस्सं अदि-णिसंसं। (२८)

भागु। भदन्त! अहमपि मुद्रां न दास्यामि।

क्षप। [स्वगतम्।] युक्तम् इदानीम् अर्थिने (ठ) कथयितुम्। [प्रकाशम्।] का गदी? एसे णिवेदेमि, सुणादु सावको। अत्थि दाव हगे अधस्सो पढमं पाडलिउत्ते णिवसमाणो लक्खसस्स मित्तत्तणं उवगदे। तहिंव्व अवसले लक्खसेण गूढं विसकस्सप्पओअं समुप्पादिअ, घादिदे देवे पव्वदीसले। (२९)

मल। [सवाष्पम् आत्मगतम्।] कथं, राक्षसेन घातितः तातो न चाणक्येन?

भागु। भदन्त! ततस्ततः?

क्षप। तदो हगे लक्खसस्स मित्तं कदुअ, चाणक्कहदएण सणिआलं णअरादो णिव्वासिदो। दाणीं पि लक्खसेण अणेअ अकज्जकुसलेण किंपि तादिसं आलभीअदि, जेण हगे जीअलोआदो णि[व्वा]सिअआमि। (३०)

---

(२८) उपासक! नास्तीदं तथापि न कथयिष्यामि अतिनृशंसम्।

(२९) का गतिः? एष निवेदयामि, शृणोतु उपासकः। अस्ति तावत् अहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः। तस्मिन्नेवावसरे राक्षसेन गूढं विषकन्याप्रयोगं समुत्पाद्य, घातितो देवः पर्वतेश्वरः।

(३०) ततोऽहं राक्षसस्य मित्रं कृत्वा, चाणक्यहतकेन सनिकारं नगरान्निर्वासितः। इदानीमपि राक्षसेन अनेकाकार्य्यकुशलेन किमपि तादृशमालभ्यते, येनाहं जीवलोकात् नि[र्वास्ये]ष्यास्ये।

---

(ठ) अर्थिने प्रार्थयमानाय भागुरायणाय।

भागु । भदन्त ! प्रतिश्रुतराज्यार्द्ध [मयच्छता] सम्प्रदानम् अनिच्छता चाणक्यहतकेन इदम् अकार्य्यम् अनुष्ठितं, न राक्षसेन इति श्रुतम् अस्माभिः ।

क्षप । [ कर्णौ पिधाय ।] सन्तं पावं । सावका ! चाणक्को विसकस्साए णामंपि ण जाणादि । तेण ज्जेव दुट्ठबुद्धिणा लक्खसेण एसा अकज्जसिद्धी किदा (२१) ।

भागु । भदन्त ! कष्टमिदम्, इयं मुद्रा दीयते, एहि कुमारं संश्रावयावः ।

मल । श्रुतं सखे ! श्रवणविदारणं वचः

सुहृन्मुखाद्रिपुमधिकृत्य भाषितम् ।
पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्द्धते ॥ ६ ॥

क्षप । [स्वगतम् ।] अये ! श्रुतं मलयकेतुहतकेन कृतार्थोऽस्मि ।

[ इति निष्क्रान्तः । ]

मल । [ प्रत्यक्षवत् आकाशे लक्ष्यं बद्धा ।] राक्षस ! युक्तमिदम् ।—

---

(२१) शान्तं पापम् । उपासक ! चाणक्यो विषकन्यायाः नामापि न जानाति । तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्य्यसिद्धिः कृता ।

---

श्रुतमिति ।—हे सखे ! रिपुं पर्वतेश्वरवधात् कृत्रिमशत्रुं राक्षसमधिकृत्य आश्रित्य भाषितं कथितं श्रवणविदारणम् श्रुतमात्रेण पीड़ाजनकत्वात् अतिकठोरमित्यर्थः वचः वाक्यं सुहृन्मुखात् सुहृदः राक्षसस्यैव मित्रस्य क्षपणकस्य [ सुहृन्मित्रयोः भेदो यथा— "अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ॥" इत्युक्तेः ] मुखात् श्रुतं सुहृन्मुखादित्यनेन अस्य वचनस्य न कथञ्चन मिथ्यात्वसम्भव इति भावः । येन श्रवणेन मे मम इदं पितुर्वधव्यसनं पितृविनाशजनितकष्टं चिरादपि पुरातनमपि अद्य प्रत्यक्षायमाणत्वात् नवीकृतं सत् द्विगुणमिव वर्द्धते । रुचिरा वृत्तम् ॥६॥

मित्रं ममायमिति निर्वृतचित्तवृत्तिः
विस्रम्भतस्त्वयि निवेशितसर्वकार्य्यः ।
तातं निपात्य, सह बन्धुजनाक्षितोयैः
अन्वर्थतोऽपि ननु राक्षस ! राक्षसोऽसि ॥ ७ ॥

भागु । [स्वगतम् ।] रक्षणीया राक्षसस्य प्राणाः इति आर्य्यादेशः । भवतु एवं तावत् । [प्रकाशम् ।] कुमार ! अलम् आवेगेन ? आसनस्थं कुमारं किञ्चिद् विज्ञापयितुम् इच्छामि ।

मल । [उपविश्य ।] सखे ! किमसि वक्तुकामः ?

भागु । कुमार ! इह खलु अर्थशास्त्रव्यवहारिणाम् अर्थवशात् अरिमित्रोदासीनव्यवस्था न लौकिकानाम् इव स्वेच्छावशात् । यतः तस्मिन् काले सर्वार्थसिद्धिं राजानम् इच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया गृहीतनामा देवः पर्वतेश्वर एव अर्थपरिपन्थी (ड) महान् अरातिः आसीत् । तस्मिंश्च काले, राक्षसेन इदम् अनुष्ठितम् इति न अतिदोषमिव अत्र पश्यामि । पश्यतु कुमारः,—

---

मित्रमिति ।—अयं राक्षसः मम मित्रम् सुहृद् इति विस्रम्भतः विश्वासात् त्वयि निवेशितसर्वकार्य्यः समर्पितसकलराज्यभारः निर्वृतचित्तवृत्तिः निश्चिन्तमनोवृत्तिः तात आसीदिति पदद्वयमध्याहार्य्यम्, अथवा निर्वृतचित्तवृत्तिः संतुष्टमनोवृत्तिरहमस्मीति शेषः । ननु राक्षस ! त्वं तातं बन्धुजनाक्षितोयैः बन्धुजनाश्रुभिः सह निपात्य अन्वर्थतः योगार्थतः अपि राक्षसोऽसि, राक्षसवत् क्रूरकर्मकारित्वादिति भावः । वसन्ततिलकं वृत्तम् ॥ ७ ॥

(ड) अर्थवशात् प्रयोजनवशात् अरिमित्रोदासीनव्यवस्था अयम् अरिः अयं शत्रुः अयं मित्रम् अयम् उदासीनः मध्यस्थः इत्येवंरूपा व्यवस्था विचारः । बलीयस्तया प्राबल्येन । अर्थपरिपन्थी कार्य्यप्रतिबन्धी ।

मित्राणि शत्रुत्वमिवानयन्ती, मित्रत्वमप्यर्थवशाच्च शत्रून्।
नीतिर्नयत्यस्मृतपूर्ववृत्तं, जन्मान्तरं जीवत एव पुंसः॥ ८॥

तदत्र वस्तुनि अनुपालभ्यो राक्षसः, आ नन्दराज्यलाभात् अनुग्राह्यश्च, परतः तस्य परिग्रहे, परित्यागे वा, कुमारः प्रमाणं भविष्यति।

मल। एवं भवतु। सखे! सम्यक् दृष्टवानसि। अन्यथा अस्य [अमात्यस्य] वधे प्रकृतिक्षोभः स्यात्। एवञ्च सन्दिग्धो विजयः स्यात् अस्माकम्।

[प्रविश्य पुरुषः।] जेदु जेदु कुमारो। अअं अज्जस्स गुम्मट्ठाणाधिकिदो दीहचक्खू अज्जं विण्णवेदि, एसो क्खु अह्मेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरिसो गहीदो, ता पच्चक्खीकरेदु णं अज्जो त्ति। (३२)

भागु। भद्र! प्रवेशय।

पुरु। जं अज्जो आणवेदि त्ति (३३)।

[निष्क्रान्तः।]

---

(३२) जयति जयति कुमारः। अयम् आर्य्यस्य गुल्मस्थानाधिकृतो दीर्घचक्षुः आर्य्यं विज्ञापयति, एष खलु अस्माभिः कटकात् निष्क्रामन् अगृहीतमुद्रः सलेखः पुरुषो गृहीतः, तत् प्रत्यक्षीकरोतु एनम् आर्य्य इति।

(३३) यदार्य्य आज्ञापयतीति।

---

मित्राणीति।—नीतिः अर्थशास्त्रनियमः अर्थवशात् प्रयोजनवशात्। मित्राणि शत्रुत्वं शत्रूंश्च मित्रत्वम् आनयन्ती प्रापयन्ती इव अत एव जीवत एव पुंसः पुरुषान् अस्मृतपूर्ववृत्तम् अचिन्तितपूर्ववृत्तान्तं जन्मान्तरं नयति। अत्र व्यतिरेको व्यङ्ग्यः। इन्द्रवज्रा वृत्तम्॥ ८॥

[ ततः प्रविशति पुरुषेण अनुगम्यमानः संयतः सिद्धार्थकः। ]

सिद्धा। [ स्वगतम्। ]

तिप्पन्तीए गुणेसुं दोसेसुं परंमुहं करन्तीए।
अह्मारिसजणणीए प्पणमामो सामिभत्तीए (२४) ॥८॥

पुरु। [उपसृत्य।] अज्ज ! अअं सो पुरिसो। (२५)

भागु। [नाट्येन अवलोक्य।] भद्र ! किम् अयम् आगन्तुकः, आहोस्वित् इहैव कस्यचित् परिग्रहः (ढ) ?

सिद्धा। अज्ज ! अहं क्खु अमच्चरक्खसस्स [ सेवओ ] पाससवत्ती। (२६)

भागु। भद्र! तत् किमर्थम् अगृहीतमुद्रः कटकात् निष्क्रामसि ?

सिद्धा। अज्ज ! कज्जगोरवेणह्मि तुवराइदो। (२७)

भागु। कीदृशं तत् कार्य्यगौरवं, यत् राजशासनम् उल्लङ्घयसि ?

---

(२४) तृप्यन्त्यै गुणेषु, दोषेषु पराङ्मुखं कुर्वत्यै।
अस्माकं अनन्यै प्रणमामः स्वामिभक्त्यै ॥

(२५) आर्य्य ! अयं स पुरुषः।

(२६) आर्य्य ! अहं खलु अमात्यराक्षसस्य [सेवकः] पार्श्वपरिवर्त्ती।

(२७) आर्य्य ! कार्य्यगौरवेणास्मि त्वरितः।

---

तृप्यन्त्यै इति।—गुणेषु भृत्यानामिति शेषः सत्सु तृप्यन्त्यै प्रीतिदायिन्यै, दोषेषु सत्सु पराङ्मुख कुर्वत्यै, दूरीकुर्वत्यै अस्मादृशजनन्यै पोषणकर्तृत्वधर्मादिति भावः स्वामिभक्त्यै प्रणमामः। "क्रियया यमभिप्रैति" इति चतुर्थी। अत्र प्रस्तुतायां स्वामिभक्तौ महापुरुषगुणस्य अप्रस्तुतस्य विशेषणादिना व्यवहारसमारोपात् समासोक्तिरलङ्कारः ॥८॥

(ढ) आगन्तुकः उदासीनः। परिग्रहः आश्रितः।

मल। सखे! भागुरायण! लेखम् उपानय।

सिद्धा। [भागुरायणाय लेखम् अर्पयति।]

भागु। [सिद्धार्थकहस्ताल्लेखं गृहीत्वा मुद्रां दृष्ट्वा। कुमार! अयं लेखः, राक्षसनामाङ्किता इयं मुद्रा।

मल। मुद्रां परिपालयन् उद्घाट्य दर्शय।

भागु। [तथा कृत्वा दर्शयति।]

मल। [गृहीत्वा वाचयति।] स्वस्ति, यथास्थाने कुतोऽपि, कोऽपि, कमपि, पुरुषविशेषम् अवगमयति। अस्मद्विपक्षं निराकृत्य, दर्शिता कापि सत्यवादिता सत्यवता। साम्प्रतम् एषामपि प्रथममुपन्यस्तसन्धीनाम् अस्मत्सुहृदां, पूर्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनप्रोत्साहनेन सत्यसन्धः, प्रीतिम् उत्पादयितुम् अर्हति। एते हि एवमुपगृहीताः सन्तः, स्वाश्रयविनाशेनैव उपकारिणम् आराधयिष्यन्ति। अविस्मृतमपि एतत् सत्यवतः स्मारयामः, एतेषां मध्ये केचित् अरेः कोषदन्ति[ण्डा]भ्याम् अर्थिनः, केचिद् विषयेण इति, अस्मान् प्रति अलङ्कारत्रयञ्च, यत् सत्यवतानुप्रेषितं, तदुपगतम्। अस्माभिरपि लेखस्य अशून्यार्थं किञ्चित् अनुप्रेषितं, तदुपगमनीयं, वाचिकञ्च आप्ततमात् सिद्धार्थकात् श्रोतव्यम् इति (ग)।

मल। सखे! भागुरायण! कीदृशो लेखार्थः?

भागु। भद्र! सिद्धार्थक! कस्य अयं लेखः?

सिद्धा। अज्ज! ण आणामि। (३८)

---

(३८) आर्य्य! न जानामि।

---

(ग) अयमेव लेखः चाणक्येन शकटदासेन लेखयित्वा तदङ्गुरीयमुद्रयाऽङ्कयित्वा च सिद्धार्थकाय "एवमेव करणीयमिति" कर्णे उपदिश्य पूर्व्वमर्पितः इति ज्ञातव्यम्।

भागु। हे धूर्त्त! लेखो नीयते, न च ज्ञायते कस्यायम् इति सर्वं तावत् तिष्ठतु, वाचिकं त्वत्तः केन श्रोतव्यम्?

सिद्धा। [भयं नाटयन्।] तुझेहिं। (३९)

भागु। किमस्माभिः?

सिद्धा। तुझेहिं गहीदो, ण आणामि का कधेति। (४०)

भागु। [सक्रोधम्।] एष ज्ञास्यति। भद्र! भासुरक! वहिर्नीत्वा, ताद्यतां तावत्, यावत् सर्वम् अनेन कथितं भवेत्।

भासु। जं अज्जो आणवेदि त्ति (४१)।

[ सिद्धार्थकेन सह निष्क्रान्तः। ]

[पुनः प्रविश्य।] अज्ज! इयं तस्स ताड़ीअमाणस्स णाम-मुद्दालंच्छिदा आहरणपेड़िआ णिवड़िदा। (४२)

भागु। [विलोक्य।] कुमार! इयमपि राक्षसमुद्राङ्कितैव।

मल। अयं लेखस्य अशून्यार्थो भविष्यति। इमाम् अपि मुद्रां परिपालयन् उद्घाट्य दर्शय।

भागु। [ तथा कृत्वा दर्शयति। ]

मल। [ विलोक्य। ] अये! तदिदम् आभरणं, यन्मया स्वशरीरात् अवतार्य्य राक्षसाय प्रेषितम्। व्यक्तं चन्द्रगुप्तस्य अयं लेखः।

---

(३९) युष्माभिः।

(४०) युष्माभिर्गृहीतो न जानामि का कथेति।

(४१) यत् आर्य्य आज्ञापयति इति।

(४२) आर्य्य! इयं तस्य ताड्यमानस्य नाममुद्रालाञ्छिता आभरणपेटिका निपतिता।

भागु । कुमार ! एष निर्णीयते संशयः । भद्र ! पुनरपि ताड्यताम् ।

पुरु । जं अज्जो आणवेदि त्ति । [ निष्क्रम्य पुनः प्रविश्य च । ] अज्ज ! एसो क्खु ताड़ीअमाणो विराणवेदि कुमारस्स स्सअं ज्जेव णिवेदेमि त्ति । ( ४३ )

मल । प्रवेशय ।

पुरु । जं कुमारो आणवेदि त्ति(४४) ।

[ निष्क्रम्य सिद्धार्थकेन सह प्रविशति । ]

सिद्धा । [ पादयोर्निपत्य । ] अभएण मे कुमारो प्पसादं करेदु । ( ४५ )

मल । भद्र ! भद्र ! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथावस्थितम् ।

सिद्धा । णिसामेदु कुमारो, अहं क्खु अमच्चरक्खसेण इमं लेहं देइअ, चन्दउत्तसकासं प्पेसिदोह्मि । ( ४६ )

मल । भद्र ! वाचिकमिदानीं श्रोतुमिच्छामि ।

सिद्धा । कुमार ! संदिट्ठोह्मि अमच्चरक्खसेण, जधा, एदे मम प्पिअवअस्सा पञ्च राआणो तुए सह पढ़मसमुप्पण्णसन्धाणा । जह्वा, कुलूदाहिवो चित्तवम्मा, मलअणाहिवो

---

(४३) यत् आर्य्य आज्ञापयति । आर्य्य ! एष खलु ताड्यमानो विज्ञापयति, कुमारस्य स्वयमेव निवेदयामीति ।

(४४) यत् कुमार आज्ञापयतीति ।

(४५) अभयेन मे कुमारः प्रसादं करोतु ।

(४६) निशामयतु कुमारः, अहं खलु अमात्यराक्षसेन, इमं लेखं दत्वा, चन्द्रगुप्तसकाशं प्रेषितोऽस्मि ।

(४७) कुमार ! संदिष्टोऽस्मि अमात्यराक्षसेन, यथा, एते मम प्रियवयस्याः पञ्च

सिंहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसीअधिवदी मेहक्खो त्ति। एत्थ ज्जेव पढ़मभणिदा तिस्सि राआणो मलअकेदुणो विसअं अहिलसन्ति [इच्छन्ति] इदरे वि दुवे कोसहत्थिवलं त्ति। ता अधा, चाणक्कं णिराकरिअ महाराएण, मम प्पीदी उप्पादिआ, तधा एदाणं पि पढ़मभणिदो अत्थो प्पसादइदव्वो, एत्तिको राअसन्देसो त्ति। (४७)

मल। [स्वगतम्]। कथं चित्रवर्म्मादयोऽपि माम् अभिद्रुह्यन्ति, अत एव एतेषां राक्षसे निरतिशया प्रीतिः। [प्रकाशम्।] विजये! अमात्यराक्षसं द्रष्टुमिच्छामि।

प्रती। जं कुमारो आणवेदि त्ति। (४८)

[निष्क्रान्ता:।]

[ततः प्रविशति आसनस्थः स्वभवनगतः पुरुषेण अनुगम्यमानः सचिन्तो राक्षसः।]

राक्ष। [स्वगतम्।] सम्पूर्णम् अस्मद्बलं चन्द्रगुप्तबलैः इति यत्, सत्यं न मे मनसः शुद्धिरस्ति। कुतः?—

---

राजानस्त्वया सह प्रथमसमुत्पन्नसम्बन्धाः। यथा, कुलूताधिपश्चित्रवर्मा, मलयजनपदाधिपतिः सिंहनादः, काश्मीरदेशाधिपः पुष्कराक्षः, सिन्धुराजः सिन्धुसेनः, पारसीकाधिपतिर्मेघाक्ष इति। अत्रैव प्रथमभणितास्त्रयो राजानः मलयकेतोर्विषयमभिलष्यन्ति (इच्छन्ति) इतरावपि द्वौ कोषहस्तिबलमिति। तद्यथा चाणक्यं निराकृत्य महाराजेन मम प्रीतिरुत्पादिता, तथा एतेषामपि प्रथमभणितोऽर्थः सम्पादयितव्य इति एतावान् राजसन्देश इति।

(४८) यत् कुमार आज्ञापयतीति।

साध्ये निश्चितमन्वयेन कथि [घटि] तं बिभ्रत् स्वपक्षे स्थितिं,
व्यावृत्तञ्च विपक्षतो भवति, यत् तत् साधनं सिद्धये।
यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धञ्च यत्
तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः॥ १०॥

अथवा, तैः तैः विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैः

---

साध्ये इति।—यत् साधनं सैन्यादि, सिद्धिहेतुर्धूमादिलिङ्गञ्च साध्ये निष्पाद्ये वस्तुनि, सिसाधयिषिते वह्न्यादौ च तत्साधनार्थेत्यर्थः (निमित्तार्थे सप्तमी) निश्चितं निश्चितसामर्थ्यं निश्चितव्याप्तिकञ्च अन्वयेन आनुगत्येन, तत्सत्त्वनियतसत्ताकत्वरूपान्वयव्याप्त्या च कथितं युक्तं (घटितं वा) स्वपक्षे स्ववर्गे, सन्दिग्धसाध्यके पर्वतादौ च स्थितिम् आनुकूल्यं सत्त्वं च बिभ्रत्, विपक्षात विरुद्धपक्षात् शत्रुवर्गात्, साध्याभाववतो जलादेश्च व्यावृत्तमनिवृत्तं भवति तत्साधनं सिद्धये कार्य्यसाधनाय, साध्यानुमितिरूपसिद्धये च भवति। यत् पुनः साधनं स्वयमेव साध्यं भयादिप्रदर्शनेन वशीकार्य्यं न तु स्वत आयत्तमित्यर्थः स्वयमसिद्धत्वात् साधनान्तरेण साध्यमनुमेयञ्च। उभयोः शत्रुपक्षे आत्मपक्षे च तुल्यम् उभयपक्षानुकूल्यकारि उभयवेतनग्राहित्वात् समभावं, स्वपक्षे पर्वतादौ विपक्षे जलादौ च तुल्यम् उभयत्र स्थितत्वात् साधारणम्। पक्षे आत्मवर्गे, सन्दिग्धसाध्यकपर्वतादौ च विरुद्धम् तद्वृत्तिसाध्याभावेन सहानवस्थानात् विरोधि तस्य तथाविधस्य सैन्यादेः, साधनस्य आङ्गीकरणेन स्वीकारेण वादिनः तत्त्वनिर्णयार्थकथाकृदवादवत इव स्वामिनः निग्रहः तिरस्करणं, पराजयश्च स्यात् पर्वते वह्निसाधनाय निश्चितसामर्थ्यं गृहीतान्वयव्याप्तिकं च धूमादिरूपं लिङ्गं स्वपक्षपर्वतादौ स्थितं न तु विरुद्धं विपक्षात् जलादितो व्यावृत्तं तेनासाधारणम् एतादृशं लिङ्गं वह्न्यादिसाधने वादिना प्रयुक्तं सिद्धये भवति। यत्तु साधनं स्वयमेव साध्यं न तु सिद्धं तेन असिद्धिदोषः उभयोः स्वपरपक्षयोः पर्वतजलयोस्तुल्यं यथा द्रव्यत्वादि। पक्षे पर्वतादौ विरुद्धं यदस्ति जलत्वादि तथाच तादृशहेतोः असिद्धिसाधारण्यविरोधरूपदोषदुष्टत्वम्। तत्परिग्रहे वादिनो यथा निग्रहः पराजयः एवं तथाभूतसैन्यादेरङ्गीकारे स्वामिनः पराजय इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ १०॥

आपूर्णमिति ( त ) न विकल्पयितुम् अर्हामि। [ प्रकाशम्। ] प्रियंवदक! उच्यन्ताम् अस्मद्वचनात् कुमारानुयायिनो राजानः, सम्प्रति दिने दिने प्रत्यासीदति कुसुमपुरम्, अतः परिकल्पितविभागैः भवद्भिः प्रयाणे ( थ ) प्रस्थातव्यम्। कथमिति?—

प्रस्थातव्यं पुरस्तात् खसमगधगणैर्मामनु व्यूढसैन्यै-
र्गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः।
पश्चाद् गच्छन्तु वीराः, शकनरपतयः, संवृताश्चेदिहूणैः,
कौलूताद्यश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारम् ॥११॥

प्रियं। जं अमच्चो आणवेदि त्ति (४८)।

[ निष्क्रान्तः। ]

---

(४८) यत् अमात्य आज्ञापयतीति।

---

(त) विज्ञाता इङ्गितादिभिरनुमिता ये अपरागस्य चन्द्रगुप्तानुरागस्य हेतवः तैर्हेतुभिः, प्राक् पूर्वं परिगृहीतः ज्ञातः उपजापः भेदः येषां तादृशैः प्रधानपुरुषैः भद्रभटादिभिरिति शेषः।

(थ) प्रत्यासीदति निकटे वर्त्तते। परिकल्पितविभागैः कृतसैन्यविभागैः। प्रयाणे संग्रामयात्रायाम्।

प्रस्थातव्यमिति।—माम् अनु मम पश्चात् खसमगधगणैः खसमगधराजभिः व्यूढं विभक्तं सज्जीकृतं वा सैन्यं यैः तादृशैः सद्भिः पुरस्तात् आयोधनसन्नद्धसैन्यमग्रस्य अग्रे प्रस्थातव्यम् गन्तव्यमित्यर्थः। सयवनपतिभिः यवनपतिसहितैः गान्धारैः मध्ययाने सैन्यमध्यगमने प्रयत्नः विधेयः कर्त्तव्यः। तत्पश्चात् चेदिहूणैः संवृताः सहिताः वीराः शकनरपतयः गच्छन्तु। शिष्टः अवशिष्टः कौलूताद्यः कौलूतप्रभृतिः ( कुलूतानां जनपदानां राजा कौलूतः चित्रवर्म्मा स आद्यो यस्य सः, आद्यपदेन सिंहनाद-पुष्कराक्ष-सिन्धुसेन-मेघाक्षाणां ग्रहणं) राजलोकः नरेन्द्रवर्गः पथि कुमारं मलयकेतुं परिवृणुयात् परिवार्य्य गच्छेत्। चित्रवर्म्मादीनां च राक्षसमित्रत्वेन तत्र सन्देहाभावात् कुमारानुगमनमुक्तमन्येषां प्रायशश्चन्द्रगुप्तात् विरज्य एतत्पक्षाश्रयणात् तत्र सन्देहात् नैषामन्यत्र गमनमनुशिष्टमिति द्रष्टव्यम्। स्वभावोक्तिरलङ्कारः। स्रग्धरा वृत्तम् ॥ ११ ॥

प्रतीहारी। [ प्रविश्य ] जेदु जेदु अमच्चो। अमच्चं इच्छदि कुमारो पेक्खिदुं। ( ५० )

राच। भद्रे ! मुहूर्त्तं तिष्ठ। कः कोऽत्र भोः ?

पुरुषः। [प्रविश्य] आणवेदु अमच्चो। (५१)

राच। भद्र! शकटदासं प्रति ब्रूहि, यथा परिधापिता वयम् आभरणं कुमारेण, तत्र युक्तम् इदानीम् अस्माभिः अनलङ्कृतैः कुमारदर्शनम् अनुभवितुम्, अतो यत् तत् अलङ्करणत्रयं क्रीतं तन्मध्यात् एकं दीयताम् इति।

पुरु। जं अमच्चो आणवेदि त्ति। [ निष्क्रम्य पुनः प्रविश्य च ] अमच्च ! इदं तं अलङ्करणं। (५२)

राच। [ नाट्येन अवलोक्य आत्मानम् अलङ्कृत्य उत्थाय च। ] भद्रे ! राजकुलगामिनं मार्गम् आदेशय।

प्रती। एदु एदु अमच्चो। (५३ )

राच। [स्वगतम्।] अधिकारपदं (द) नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम्। कुतः ?—

भयं तावत् सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद् भवति हृदयेष्वेव निहितम्।
अतोऽध्यारूढ़ानां पदमसुजनद्वेषजननं,
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥१२॥

---

(५०) जयति जयति अमात्यः। अमात्यमिच्छति कुमारः प्रेक्षितुम्।

(५१) आज्ञापयतु अमात्यः।

(५२) यत् अमात्य आज्ञापयतीति। अमात्य ! इदं तदलङ्करणम्।

(५३) एतु एतु अमात्यः।

---

(द) अधिकारपदं दासत्वम्।

भयमिति।—सेव्यात् जनात् स्वामिन इत्यर्थः भयं तावत् प्रथममित्यर्थः सेवकजनम्

प्रती। [ परिक्रम्य। ] अमच्च ! अअं कुमारो चिट्ठदि, ता उवसप्पदु णं अमच्चो। (५४)

राक्ष। [नाट्येन अवलोक्य।] अये ! अयं कुमारः तिष्ठति। य एषः।—

पादाग्रे दृशमवधाय निश्चलन्तीं,
शून्यत्वादपरिगृहीततद्विशेषाम्।
वक्त्रेन्दुं वहति करेण दुर्वहाणां
कार्य्याणां कृतमिव गौरवेण नम्रम्॥ १३॥

[उपसृत्य।] विजयतां विजयतां कुमारः।

मल। आर्य्य ! अभिवादये। इदमासनम् आस्यताम्।

---

(५४) अमात्य ! अयं कुमारस्तिष्ठति, तदुपसर्पत्वेनममात्यः।

---

अभिनिविशते सेवकजनेषु लब्धाश्रयं तिष्ठतीत्यर्थः। "नेर्विशः" इत्यात्मनेपदम्। "अभिनिविशश्च" इति सूत्रेण "सेवकजनम्"इत्यधिकरणस्य कर्म्मता। ततः प्रत्यासन्नात् स्वामिनः पार्श्वचरात् भयं हृदयेषु एव निहितं भवति, अध्यारूढानाम् उन्नतपदस्थानां भृत्यानामिति शेषः यदं कर्म्म अमुजनद्वेषजननम् अमुजनस्य दुर्जनस्य द्वेषजननं हिंसावर्द्धनं भवति। अतः कारणात् सोच्छ्रायाणाम् अत्युन्नतानां महामहिमशालिनां भृत्यानां मतिः पतनम्, स्वात्मनः अधोगमनं अनुकूलं नियतं यथा तथा कलयति पतनभयमेव चिन्तयतीत्यर्थः। अत्युच्चः पतनायेति लोकोक्तिमनुसृत्य सदा पतनभयमेवास्माकमिति भावः। अत्र प्रथमार्द्धोक्तः वाक्यद्वयनिहितार्थसङ्घः द्वितीयार्द्धोक्तसमुन्नतपदारूढानाम् अधिकारिणां, पतनं नियतसम्भवम् इत्याद्यर्थकलने हेतुत्वेन निरूपितः इति वाक्यार्थगतः काव्यलिङ्गालङ्कारः। एवं स्वतः सम्भविना समुन्नत-पतन-विमर्शनिर्णय-वस्तुना व्यज्यमानो "राजसेवा मनुष्याणाम् असिधारावलेहनम्। पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम्"॥ इत्याद्यनुरूपार्थकवस्तुरूपव्यङ्ग्यः वस्तुना वस्तुध्वनिः इत्यालङ्कारिकाः। शिखरिणी वृत्तम्॥ १२॥

पादाग्रे इति।—शून्यत्वात् निरवलम्बनत्वात् अपरिगृहीततद्विशेषां न परिगृहीतः ज्ञातः तद्विशेषः तस्य पादाग्रस्य विशेषो रूपादिर्यया तादृशीम् अत एव निश्चलन्तीं स्थिरां विषयान्तरेऽसज्जमानामित्यर्थः दृशं पादाग्रे ऐकाग्र्येण अवधाय स्थापयित्वा दुर्वहाणां कार्य्याणां

राक्ष । [ उपविशति । ]

मल । अमात्य ! चिरम् अदर्शनेन आर्य्यस्य वयम् उद्विग्नाः ।

राक्ष । कुमार ! प्रयाणे प्रतिविधानम् अनुतिष्ठता मया, कुमारात् अयमुपालम्भोऽधिगतः (ध) ।

मल । अमात्य ! प्रयाणे कथं प्रतिविहितमिति श्रोतुम् इच्छामि ।

राक्ष । कुमार ! एवमादिष्टाः कुमारस्य अनुयायिनो राजानः । [ प्रस्थातव्यमित्यादिश्लोकं ( १५२ पृष्ठस्थम् ) पुनः पठति । ]

मल । [ स्वगतम् । ] विज्ञायते, कथं य एव मद्विनाशेन चन्द्रगुप्तम् आराधयितुम् उद्यतास्त एव मां परिवृण्वन्ति । [ प्रकाशम् । ] आर्य्य ! अस्ति कश्चिद् यः कुसुमपुरं प्रतिगच्छति, तत आगच्छति वा ?

राक्ष । कुमार ! अवसितम् इदानीं गतागतप्रयोजनम् । ननु पञ्चषैः अहोभिः वयमेव तत्र गन्तारः (न) ।

मल । [स्वगतम् ।] विज्ञायते । [प्रकाशम् ।] यदि एवं, तत् किमयम् आर्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः ?

राक्ष । [विलोक्य ।] अये ! सिद्धार्थकः । भद्र ! किमिदम् ?

सिद्धा । [सवाष्पं लज्जां नाटयन् ।] पसीददु पसीददु

---

चिन्तनीयवस्तूनां गौरवेण भारेण नम्रं कृतमिव वक्त्रेन्दुं मुखचन्द्रं करेण वहति धारयति, करतले मुखं निवेश्य पादाग्रे दृष्टिं निधाय किमपि दुर्वहं कार्य्यं चिन्तयतीत्यर्थः । अत्र प्रगाढदुश्चिन्ता-विनताननै कार्य्यगौरवभाराक्रान्तता समुत्प्रेक्ष्यते इत्युत्प्रेक्षालङ्कारः । प्रहर्षिणी वृत्तम् ॥ १९ ॥

(ध) प्रतिविधानम् उद्योगम् । उपालम्भः तिरस्कारः ।

(न) अवसितं समाप्तम् । गन्तारः "अनद्यतने लुट" इति भविष्यदनद्यतनेऽर्थे लुट पञ्चषैः, पञ्च वा षड् वा इति डः समासान्तः । पञ्चषड्वासरान्तरमेव गमिष्याम इत्यर्थः

अमच्चो। अमच्च ! ताड़ीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं धारिदुं (५५)।

राक्ष। भद्र ! कीदृशं तत् रहस्यमिति, न खलु अवगच्छामि।

सिद्धा। ननु विस्सवेमि, ताड़ीअन्तेण मए—" (५६)।

[ इत्यर्द्धोक्ते सभयम् अधोमुखः तिष्ठति। ]

मल। भागुरायण ! स्वामिनः पुरस्तात् भीतो लज्जितश्च, नैष कथयिष्यति, अतः स्वयमेव आर्य्याय कथय।

भागु। यत् आज्ञापयति कुमारः। अमात्य ! एष कथयति, यथा अहम् अमात्यराक्षसेन लेखं दत्त्वा, वाचिकञ्च सन्दिश्य, चन्द्रगुप्तसकाशं प्रेषित इति।

राक्ष। भद्र ! सिद्धार्थक ! अपि सत्यम् ?

सिद्धा। (लज्जां नाटयन्।) * * * * एदं ताड़ीअन्तेण मए णिवेदिदं। (५७)

राक्ष। कुमार ! अनृतमेतत्। ताड्यमानः किं न ब्रूयात् ?

मल। भागुरायण ! दर्शय लेखं, वाचिकञ्च अयमस्मै स्वभृत्यः कथयिष्यति।

भागु। [ श्रुत्वा लेखम् अवलोकयन्। "स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि पुरुषम् अवगमयति" इति ( १४७ पृष्ठस्थम्) वाचयति। ]

राक्ष। कुमार ! कुमार ! शत्रोः प्रयोग एषः।

---

(५५) प्रसीदतु प्रसीदतु अमात्यः। अमात्य ! ताड्यमानेन मया न पारितममात्यस्य रहस्यं धारयितुम्।

(५६) ननु विज्ञापयामि, ताड्यमानेन मया

(५७) इदं ताड्यमानेन मया निवेदितम्

मल। लेखस्य अशून्यार्थम् (प) आर्य्येण इदमाभरणम् अनुप्रेषितम्, इति तत् कथं शत्रोः प्रयोग एष स्यात्।

[इति आभरणं दर्शयति।

राक्ष। [आभरणं निर्वर्ण्य।] कुमार! न एतन्मया अनुप्रेषितम्, एतद्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तम्।

भागु। भो अमात्य! ईदृशस्य आभरणविशेषस्य, विशेषतः कुमारेण स्वगात्रात् अवतार्य्य, दत्तस्य अयं परित्यागभूमिः? (फ)

मल। वाचिकमपि आप्ततमात् (ब) सिद्धार्थकात् श्रोतव्यम् इति लिखितम् आर्य्येण।

राक्ष। कुतो वाचिकम्? कस्य वा लेखः? अयमेव अस्मदीयो न भवति।

मल। इयं तर्हि कस्य मुद्रा?

राक्ष। कुमार! कपटमुद्रामपि उत्पादयितुं (भ) शक्नुवन्ति धूर्त्ताः।

भागु। कुमार! सम्यगमात्यो विज्ञापयति। भद्र! सिद्धार्थक! केन अयं लिखितो लेखः?

[सिद्धा। राक्षसमुखम् अवलोक्य तूष्णीम् अधोमुखः तिष्ठति।]

भागु। अलं पुनः आत्मानं ताड़यित्वा, कथय।

---

(प) अशून्यार्थं पूरणार्थं सम्पूर्णविश्वासार्थमित्यर्थः।

(फ) परित्यागभूमिः दानपात्रम्। सिद्धार्थकं लक्षयित्वा कथमात् पत्रमिति पुंलिङ्गता।

(ब) आप्ततमात् अतिविश्वस्तात्।

(भ) कपटमुद्रां कृत्रिममुद्राम्।

सिद्धा। अज्ज! सअडदासेण। (५८)

राक्ष। कुमार! यदि शकटदासेन लिखितः, तर्हि मया एव लिखितः।

मल। विजये! शकटदासं द्रष्टुम् इच्छामि।

प्रती। जं कुमारो आणवेदि त्ति। (५९)

भागु। [स्वगतम्।] न खलु अनिश्चितार्थम् आर्य्यचाणक्य-प्रणिधयोऽभिधास्यन्ति, आगत्य शकटदासो वा, सोऽयं लेख इति प्रत्यभिज्ञाय पूर्ववृत्तं (म) प्रकाशयेत्। एवं सति सन्दिहानो मलयकेतुः अस्मिन् प्रयोगे श्लथादरो भवेत्। [प्रकाशम्।] कुमार! न कदाचिदपि शकटदासोऽमात्यराक्षसस्य अग्रतो मया लिखित इति प्रतिपत्स्यते, अतोऽन्यलिखितम् अस्य आनीयतां, यतो वर्णसंवाद एव एतत् सर्वं विभावयिष्यति।

मल। विजये! एवं क्रियताम्।

भागु। कुमार! मुद्रामपि आनयतु इयम्। (य)

मल। उभयमपि क्रियताम्।

प्रती। जं कुमारो आणवेदि त्ति [निष्क्रम्य पुनः प्रविश्य।] कुमार! इदं क्खु तं सअडदासेण सहत्थलिहिदं पत्तअं, मुद्दा अ (६०)।

---

(५८) आर्य्य! शकटदासेन।

(५९) यत् कुमार आज्ञापयतीति।

(६०) यत् कुमार आज्ञापयतीति। कुमार! इदं खलु तत् शकटदासेन स्वहस्त-लिखितं पत्रं, मुद्रा च।

---

(म) पूर्ववृत्तं सिद्धार्थकेन मया शकटदासहस्तेन लिखितमिदं पत्रमिति प्रथमाङ्के दर्शितवृत्तान्तम्।

(य) इयं प्रतीहारी।

मल । [ उभयमपि नाट्येन अवलोक्य । ] आर्य्य ! संवदन्त्यक्षराणि । (२)

राक्ष । [ स्वगतम् । ] संवदन्त्यक्षराणि, शकटदासस्तु मम मित्रमिति च विसंवदन्त्यक्षराणि, तत् किं शकटदासेन लिखितम् ?—

स्मृतं स्यात् पुत्रदाराणां विस्मृताः स्वामिभक्तयः ।
चलेष्वर्थेषु लुब्धेन न यशःस्वनपायिषु ॥ १४ ॥

अथवा, कः सन्देहः ?—

मुद्रा तस्य कराङ्गुलिप्रणयिनी, सिद्धार्थकस्तत्सुहृत्
तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयम् ।
सुव्यक्तं शकटेन भेदपटुना सन्धाय सार्द्धं परैः
भर्त्तुः स्नेहपराङ्मुखेण, कृपणं प्राणार्थिना चेष्टितम् ॥१५॥

---

(२) संवदन्ति तुल्यतां गमयन्ति ।

स्मृतमिति ।—चलेषु नश्वरेषु अर्थेषु न तु अनपायिषु अविनश्वरेषु यशःसु, लुब्धेन सता शकटदासेन इति शेषः, पुत्रदाराणां "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी सम्बन्धविवक्षया वा, स्मृतं स्मरणं कृतं स्यात्, स्वामिभक्तयः विस्मृताः स्युः इति शेषः । अनुष्टुप् वृत्तम ॥ १४ ॥

मुद्रेति ।—मुद्रा तस्य शकटदासस्य कराङ्गुलिप्रणयिनी कराङ्गुलिधृता, नान्यस्य तल्लाभसम्भव इति भावः, अयं सिद्धार्थकः तत्सुहृत् तस्य मित्रं, प्रयोगाश्रयम् अभियोगसम्बन्धम् इदं पत्रं तस्यैव शकटदासस्य अपरलेख्यसूचितम् अपरेण लेख्येन सूचितं संवादितम्, एवं हेतुसाकल्यात् परैः शत्रुभिः सार्द्धं सन्धाय शकटेन प्राणार्थिना जीवनार्थिना भर्त्तुः स्नेहपराङ्मुखेण अत एव भेदपटुना उपजापकुशलेन सता सुव्यक्तं निश्चितं कृपणं दीनं यथा तथा चेष्टितं व्यवसितम् । अत्र साधनरूपेभ्यः मुद्रासुहृदादिभ्यः विचित्रविमर्शानुकूलस्य प्राणत्राणचेष्टितरूपसाध्यस्य ज्ञानात् अनुमानालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

मल। आर्य्ये! अलङ्कारत्रयं श्रीमतो यत् अनुप्रेषितं, तत् उपगतमिति आर्य्येण यल्लिखितं, तन्मध्यात् एकं किमिदम्? [ निर्वर्ण्य आत्मगतम्। ] कथं तातेन धृतपूर्वम् इदम् आभरणम्? [ प्रकाशम्। ] आर्य्य! कुतोऽयमलङ्कारः?

राक्ष। वणिग्भ्यः क्रयादधिगतः।

मल। विजये! अपि प्रत्यभिजानाति भवती भूषणमिदम्?

प्रती। [ निर्वर्ण्य सवाष्पम्। ] कुमार! कहं ण पच्चभिआणिस्सं? इमं क्खु सुगिहीदणामधेएण (ख) देएण पव्वदीसरेण धारिदपुव्वं। (६१)

मल। [ सवाष्पम्। ] हा तात!—

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण! भूषणानि।
यैः शोभितोऽसि, मुखचन्द्रकृतावभासो
नक्षत्रवानिव शरत्समयप्रदोषः॥ १६॥

राक्ष। [ स्वगतम्। ] कथं पर्वतेश्वरधृतपूर्वाणि इत्याह?

---

(६१) कुमार! कथं न प्रत्यभिज्ञास्यामि? इदं खलु सुगृहीतनामधेयेन देवेन पर्वतेश्वरेण धारितपूर्वम्।

---

(ख) सुगृहीतनामधेयेन प्रातःस्मरणीयेन "स सुगृहीतनामा स्याद् यः प्रातरनुकीर्त्यते" इत्यमरः।

एतानीति।—हे कुलभूषण! भूषणवल्लभस्य अलङ्कारप्रियस्य तव गात्रोचितानि चिरदेहपरिहितानि एतानि तानि पूर्व्वानुभूतानि भूषणानि, यैः भूषणैः नक्षत्रवान् सतारः शरत्समयप्रदोषः शारदीयनिशामुखमिव मुखचन्द्रकृतावभासः मुखं चन्द्र इव तस्मिन् कृतः अवभासः दीप्तिः यस्य तादृशः सन् शोभितोऽसि। अन्यत्र तेन कृतः अवभासः प्रकाशः यस्येति विग्रहः। उपमालङ्कारः। वसन्ततिलकं वृत्तम्॥ १६॥

[प्रकाशम् ] व्यक्तम् एतान्यपि तेन चाणक्यप्रयुक्तेन वणिग्जनेन अस्मासु विक्रीतानि ।

मल । आर्य्य ! तातेन धृतपूर्वाणाम् आभरणविशेषाणां विशेषतः चन्द्रगुप्तहस्तगतानां वणिग्भ्यः क्रयात् अधिगम इति, न युज्यते एतत्, अथवा युज्यते एव ।—

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः ।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम् ॥१७॥

राक्ष । [आत्मगतम् ।] अहो ! सुश्लिष्टोऽभूत् (व) एष प्रयोगः । कुतः ?—

लेखोऽयं न ममेति, नोत्तरमिदं, मुद्रा मदीया यतः
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम् ?
मौर्य्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत् ?
तस्मात् सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् ॥१८॥

---

चन्द्रगुप्तस्येति ।—क्रूरेण क्रूतघ्नेन भवता अधिकं लाभम् इच्छतः विक्रेतुश्चन्द्रगुप्तस्य तस्मै प्रदातुमित्यर्थः एतेषाम् आभरणानां मूल्यं वयमेव कल्पिताः, तथाच एतदाभरणं दत्त्वा भवत्सकाशात् वयमेव चन्द्रगुप्तेन क्रीताः अत एवास्य विक्रयणमुचितम् इत्यर्थः । अनुष्टुप् वृत्तम् ॥ १७ ॥

(व) सुश्लिष्टः सुदृढः ।

लेख इति ।—अयं लेखः न मम इति इदम् उत्तरं न, यतः यस्मात् मदीया मुद्रा एषैव शेषः । शकटेन सौहार्दं मित्रत्वं खण्डितं भग्नम् इति एतत् लोकैः कथं श्रद्धेयम् ? न कथमपि श्रद्धास्पदं स्यात् इत्यर्थः, को नाम नरपतौ मौर्य्ये चन्द्रगुप्ते भूषण-विक्रयम् अलङ्कारविक्रयं सम्भावयेत् सम्मानयेत् ? न कोऽपीत्यर्थः । तस्मात् अत्र विषये सम्प्रतिपत्तिः सम्प्रतिपद्यते सम्मन्यतेऽनयेति सम्प्रतिपत्तिरभिमतम् सम्मतिज्ञापकत्वात् तस्याः [illegible] स्वीकार एव वा उत्तरं वरं श्रेष्ठं, ग्राम्यम् इतरजनोचितम् अपलापरूपम् उत्तरम् असुश्लिष्टमसङ्गतमुत्तरमिति यावत्, न वरमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥१८॥

मल। एतत् आर्य्यं पृच्छामि।

राक्ष। य आर्य्यः तं पृच्छ। वयम् इदानीम् अनार्य्याः संवृत्ताः।

मल।

मौर्य्योऽसौ स्वामिपुत्रः, परिचरणपरो मित्रपुत्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं, स्वमतमनुगतस्त्वन्तु मह्यं ददासि।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र ते, स्वाम्यमत्र,
स्वार्थे कस्मिन् समीहा पुनरधिकतरे त्वामनार्य्यं करोति ॥१८॥

राक्ष। कुमार! एवम् अभियुक्तव्यवहारिणा भवता एव मे निर्णयो दत्तः। कुतः? ["मौर्य्योऽसौ स्वामिपुत्रः" इति युष्मदस्मदोर्व्यत्ययेन (ग) पठति।]

---

मौर्य्य इति।—असौ मौर्य्यः चन्द्रगुप्तः तव स्वामिपुत्रः स्वामिनो नन्दस्य पुत्रः, असवर्णायां स्त्रियामुत्पादितस्तनयः, अहं तव मित्रपुत्रः मित्रस्य पर्वतेश्वरस्य पुत्रः, मित्रपुत्रत्वेऽपि अननुकूलत्वे द्वेषभाजनत्वाशङ्कां विशिनष्टि अथच परिचरणपरः सेवाशीलः, स मौर्य्यः तुभ्यम् अर्थस्य वेतनरूपस्य दाता, अनुगतः अनुरूपविवेचकः, त्वं पुनः मह्यं स्वमतं स्वाभिप्रायानुरूपम् अर्थमिति शेषः ददासि। ननु भोः! तत्र ते तव सचिवपदरूपं दास्यं सत्कारपूर्वं सम्मानपूर्वमस्तीति शेषः, अत्र मयि तु ते स्वाम्यं प्रभुत्वम्, अतः कस्मिन् अधिकतरे स्वार्थे स्वाभिलषिते विषये समीहा चेष्टा त्वाम् अनार्य्यम् असाधुम् अनार्य्याचरितं वा करोति, तथाच अधिकलाभाशयैव नृणामकार्य्यप्रवृत्तिर्भवेत् परम् उभयपक्षयोर्मध्ये मत्पक्षाश्रयेण एव तव अधिकाभीष्टसिद्धिस्तत् कथं मामुत्सृज्य विपक्षपक्षमाश्रयसीति वाक्यार्थः। स्रग्धरा वृत्तम् ॥ १८ ॥

(ग) एवमभियुक्तव्याहारिणा इत्येव पाठः समीचीनः। तथाच, अभियुक्तं दोषितेन शङ्कितं व्याहरति वदतीति तथोक्तेन दोषी अहमिति वादिना भवता इत्यर्थः निर्णयः निर्णायकमुत्तरं दत्तः दातुमुपदिष्टः। तथाच, मौर्य्योऽसाविति श्लोके युष्मदस्मदोः शब्दयोः व्यत्ययेन वैपरीत्येन, युष्मत्स्थाने अस्मदः प्रयोगेण, अस्मत्स्थाने च युष्मदः प्रयोगेण अमुमेवं श्लोकं पठति। तद्यथा—

मल । [ लेखमलङ्करणस्थलिकां च विनिर्दिश्य । ] इद-मिदानीं किम् ?—

राच । [सवाष्पम् । ] विधेर्विलसितमिदं, न चाणक्यस्य । कुतः ?—

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां,
पुत्रेभ्यः क्वतवेदिनां क्वतधियो येषामभिन्ना वयम् ।
ते लोकस्य परीचकाः, चितिभृतः पापेन येन चताः
तस्येदं विपुलं विधेर्विलसितं, पुंसां प्रयत्नच्छिदः ॥ २० ॥

मल । [सक्रोधम् ।] कथम् अद्यापि निह्नूयते विधेर्विल-सितमिदं, न ममेति । अनार्य्य !—

कन्यां तीव्रविषप्रयोगविषमां क्वत्वा, क्वतघ्न ! त्वया
विस्रम्भप्रवणस्तदा मम पिता नीतः कथाशेषताम् ।

---

मौर्य्योऽसौ स्वामिपुत्रः परिचरणपरो मित्रपुत्रो मम त्वं
दाता सोऽर्थस्य मह्यं स्वमतमनुगतोऽहं न तुभ्यं ददामि ।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र मे, स्वाम्यमत्र
स्वार्थे कस्मिन् समीहा पुनरधिकतरे मामनार्य्यं करोति ॥ इति ।

भृत्यत्वे इति ।—परिभावधामनि तिरस्काराश्रये भृत्यत्वे दासत्वे अस्माकमिति भावः सत्यपि क्वतधियः क्वतबुद्धयः क्वतोपकारस्मर्त्तारः वयं क्वतवेदिनां क्वतज्ञानां सतां साधु-शीलानां येषां प्रभूणां नन्दानामिति शेषः स्नेहात् पुत्रेभ्यः अभिन्नाः पुत्रनिर्विशेषा आस्म इति शेषः, लोकस्य परीक्षकाः सदसद्विवेकिनः ते चितिभृतः राजानः येन पापेन विधिना चताः चयं नीताः, इदं विपुलं समग्रं पुंसां प्रयत्नच्छिदः पुरुषकारघातिनः तस्य विधेः दैवस्य विपुलं नानाविधं विलसितं चेष्टितं न चाणक्यस्येत्यर्थः तथाच यथा नन्दा-दयोऽपि भाग्येनैव हतास्तथाऽहमप्यनृतदोषभागितास्पदं क्वतः इति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥ २० ॥

कन्यामिति ।—रे क्वतघ्न ! अक्वतज्ञ क्वतोपकारविस्मारिन् ! भो, त्वया तीव्रविषप्रयोग-विषमां तीव्रः तीक्ष्णः विषस्य प्रयोगो यस्यां सा अत एव विषमा घोरा तां कन्यां क्वत्वा प्रस्तुत्य तदा विस्रम्भप्रवणः त्वयि सुविश्वस्तः मम पिता पर्वतेश्वरो

सम्यग्व्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो विक्रेतुमेते वयम् ॥ २१ ॥

राक्ष। [स्वगतम्।] अयम् अपरो गण्डस्योपरि विस्फोटः। (घ) [प्रकाशम्। कर्णौ पिधाय।] शान्तं पापं, शान्तं पापम्। नाहं विषकन्याम् आरोपितवान् अपापोऽहं पर्वतेश्वरे।

मल। केन तर्हि व्यापादितः तातः ?

राक्ष। दैवमत्र प्रष्टव्यम्।

मल। [सक्रोधम्।] दैवमत्र प्रष्टव्यं, न क्षपणको जीवसिद्धिः ?

राक्ष। [स्वगतम्।] कथं जीवसिद्धिरपि चाणक्यप्रणिधिः ! हन्त ! हृदयमपि मे रिपुभिः स्वीकृतम्।

मल। [सक्रोधम्।] आज्ञाप्यतां शिखरसेनः सेनापतिः, ये एतेन राक्षसेन सह सौहार्दमुत्पाद्य अस्मच्छरीराभिद्रोहेण (ङ) चन्द्रगुप्तम् आराधयितुकामाः पञ्च राजानः। तद्यथा, कौलूतः चित्रवर्म्मा, मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः सुषेणः, पारसीकाधिराजो मेघाख्य इति। तत्र तेषां मध्ये, ये त्रयः प्रधानतमाः प्रथमा मदीयां भूमिं

---

कथाशेषता नीतः निहत इत्यर्थः, सम्प्रति भवता रिपोः चन्द्रगुप्तस्य मन्त्राधिकारे मन्त्रिपदे आहितगौरवेण प्राप्तसम्मानेन मता प्रणयाय तत्प्रीत्यर्थमित्यर्थः (अत्र क्रियार्थोपपदे चतुर्थी) एते वयं मांसवत् विक्रेतुं प्रारब्धाः, अहो इत्याश्चर्य्ये किमाश्चर्य्यमिदमस्मादित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

(घ) गण्डस्य गण्डरोगस्य स्वतो दुःखदायकस्य उपरि विस्फोटः दुःखान्तरदायकः इव अयं पर्व्वतेश्वरवधाभियोगरूपः अपरः दोषः।

(ङ) अस्मच्छरीराय अभिद्रोहः इति व्यासवाक्ये द्रुहधातुयोगात् शरीरशब्दस्य सम्प्रदानत्वं, ततः अभिपूर्व्वत्वात् सम्प्रदानस्य कर्म्मता, ततः कृद्योगात् कर्म्मणि षष्ठीं दत्त्वा षष्ठीसमासः कार्य्यः।

कामयन्ते, ते गम्भीरश्वभ्रम् (ह) उपनीय पांशुभिः पूर्य्यन्ताम्, इतरौ तु द्वौ हस्तिबलकामौ हस्तिनैव घात्येतामिति।

पुरुष। जं कुमारो आणवेदि त्ति (६२)।

[ निष्क्रान्तः। ]

मल। [सक्रोधम्।] राक्षस! राक्षस! नाहं विस्रम्भघाती राक्षसो, मलयकेतुः खलु अहं, तद् गच्छ, समाश्रीयतां सर्वात्मना चन्द्रगुप्त इति।—

विष्णुगुप्तञ्च मौर्य्यञ्च सममप्यागतौ त्वया।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः॥ २२॥

भागु। कुमार! कृतं कालहरणेन। शीघ्रमेव कुसुमपुरोपरोधाय प्रतिष्ठाप्यन्ताम् अस्मद्बलानि।—

गौड़ीनां लोध्रधूलीपरिमलधवलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य।
पांशुव्यूहा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु॥२३॥

[ इति सपरिजनो निर्गतो मलयकेतुः। ]

(६२) यत् कुमार आज्ञापयतीति।

(ह) गम्भीरश्वभ्रं गभीरगर्त्तम्।

विष्णुगुप्तमिति।—दुर्नयः दुर्नीतिः असदाचरणमित्यर्थः त्रिवर्गं त्रयाणां धर्मार्थकामानां वर्गः समुदायः तमिव अहं त्वया मम सह आगतौ विष्णुगुप्तं चाणक्यं मौर्य्यं चन्द्रगुप्तञ्च उन्मूलयितुं नाशयितुम् ईशः समर्थः अस्मीति शेषः। उपमालङ्कारः। अनुष्टुप् वृत्तम्॥२२॥

गौड़ीनामिति।—बलानाम् अस्मत्सैन्यानां तुरगखुरपुटक्षोदलब्धात्मलाभाः तुरगाणाम् अश्वानां खुरपुटैः खुराग्रैः यः क्षोदः चूर्णनं तेन लब्धः प्राप्तः आत्मलाभः स्वोत्पत्तिः यैः तादृशाः पांशुव्यूहाः रजःसङ्घाः गौड़ीनां गौड़देशनिवासिनीनां नारीणां लोध्रधूलीपरिमलधवलान् लोध्रस्य वृक्षविशेषपुष्पस्य धूली परागः एव परिमलः

राक्ष। [सावेगम्।] हा! धिक् कष्टम्। तेऽपि हताः तपस्विनः चित्रवर्मादयः, तत् कथं सुहृन्नाशाय राक्षसः चेष्टते न रिपुविनाशाय, तत् किमिदानीं करवाणि मन्दभाग्यः!—

किं गच्छामि तपोवनं? न तपसा शाम्येत् सवैरं मनः,
किं भर्तृननुयामि? जीवति रिपौ, स्त्रीणामियं योग्यता।
किंवा खड्गसखः पताम्यरिबले? नेदं न युक्तं भवेत्?
चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात् कृतघ्नं न चेत् ॥ २४ ॥

[ इति निष्क्रान्ताः सर्वे। ]

इति पञ्चमोऽङ्कः।

---

सुगन्धिद्रव्यभेदः उभयोरपि श्वेतवर्णत्वात् तेन धवलान् कपोलान् धूसयन्तः धूम्रवर्णान् कुर्वन्तः, तासामेव भ्रमरकुलरुचः कृष्णवर्णस्य कुञ्चितस्य भङ्गिभृतः अलकस्य चूर्णकुन्तलस्य (जात्याख्यायामेकवचनं) कृष्णिमानं कृष्णत्वं छिन्दन्तः अपनयन्तः तथा गजमदसलिलच्छिन्नमूलाः गजानां मदाः एव सलिलानि तैः छिन्नं मूलं येषां तादृशाः सन्तः शत्रूणाम् उत्तमाङ्गे शिरसि पतन्तु। स्रग्धरा वृत्तम ॥ २३ ॥

किं गच्छामीति।—किं तपोवनं गच्छामि? न युक्तं तदित्याह—नेति। सवैरं मनः तपसा न शाम्येत् न शान्तिं गच्छेत्। रिपौ शत्रौ जीवति विद्यमाने किं भर्तॄन् स्वामिनः अनुयामि? इयं स्त्रीणां योग्यता अध्यवसायः न पुरुषाणाम्। किंवा अथवा खड्गसखः असिमात्रसहायः सन् अरिबले शत्रुबले पतामि? इदं शत्रुसैन्यमध्ये पतनं युक्तं न भवेत् इति न, अपितु युक्तमेव भवेत्, चेत् यदि चन्दनदासमोक्षरभसं चन्दनदासस्य तन्नामकवणिजः मोक्षे बन्धनागारात् विमोचने रभसं सवेगं व्यग्रमित्यर्थः अत एव कृतघ्नं स्वामिकृतोपकारविस्मारकं मे चेतः न मां रुन्ध्यात्। अत्र चन्दनदासमोक्षरभसं चेतः रोधने हेतुः शत्रुमध्येऽपतने कारणम् इति हेतोः वाक्यार्थस्य कारणत्वे काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

# षष्ठोऽङ्कः ।

---

[ ततः प्रविशति अलङ्कृतः सहर्षः सिद्धार्थकः । ]

सिद्धा । जअदि जलदणीलो केसवो केसिघादी
जअदि सुजणदिट्ठीचन्दमा चन्दउत्तो ।
जअदि जअणसज्जं जा अकाऊण सेसं,
पडिहदपडिवक्खा अज्जचाणक्कणीदी ॥ १ ॥

जाव चिरस्स कालस्स प्पिअवअस्सं सुसि(समि)द्धत्थअं पेक्खामि । [परिक्रम्य अवलोक्य च ।] अअं उण प्पिअवअस्सओ सुसि(समि)द्धत्थओ इदो ज्जेव आअच्छदि । ता जाव उवसप्पामि (१) ।

---

(१) जयति जलदनीलः केशवः केशिघाती
जयति सुजनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।
जयति जयनसज्जं या अकृत्वा च सैन्यं
प्रतिहतप्रतिपक्षा आर्यचाणक्यनीतिः ॥

यावत् चिरस्य कालस्य प्रियवयस्यं सुसि(समि)द्धार्थकं पश्यामि । अयं पुनः प्रियवयस्यः सुसि(समि)द्धार्थकः इत एवागच्छति । तत् यावदुपसर्पामि ।

---

अत्र जयनसज्जं सैन्यम् अकृत्वा सैन्यसङ्घर्षमन्तरा प्रतिहतप्रतिपक्षसङ्कुल चाणक्यनीतिः जयति इति विपक्षविनाशने सैन्यसाधनं हेतुः तदभावेऽपि कार्यसम्पादनाद्विभावनालङ्कारः ॥१॥

[ ततः प्रविशति सुसि(समि)द्धार्थकः । ]

सुसिद्धा ।

सन्तावेन्ता आवाणेसुं, महूसवेसुं रुआवेन्ता ।
हिअअच्छिआ विअ विहवा, विरहे मित्ताणं दुम्मणाअन्ते ॥२॥

सुदञ्च मए जधा मलअकेदुकड़आदो प्पिअवअस्सओ सिद्ध-त्थओ आअदो त्ति । ता जाव णं अण्णेसामि । [परिक्रम्य उपसृत्य च ।] एसो सिद्धत्थओ । अवि सुहं प्पिअ-वअस्सस्स ? (२)

सिद्धा । [विलोक्य ।] कधं इदो ज्जेव प्पिअवअस्सओ सुसि-(समि)द्धत्थओ । [उपगम्य] अवि सुहं प्पिअवअस्सस्स ? (३) ।

[ उभौ अन्योन्यम् आलिङ्गतः । ]

सुसिद्धा । अह्न वअस्स ! कुदो मे सुहं, जस्स तुमं चिर-आलप्पवासपच्चागदोवि, अआणिअ वुत्तन्तं, अण्णदो गदोसि त्ति (४) ।

---

(२) सन्तापयन्तः आपानेषु, महोत्सवेषु रुजायन्तः ।
हृदयस्थिता अपि विभवा(र्वे), विरहे मित्राणां दुर्मनायन्ते ॥

श्रुतञ्च मया यथा मलयकेतुकटकात् प्रियवयस्यः सिद्धार्थक आगत इति । तद् यावदेनमन्विष्यामि । एषः सिद्धार्थकः । अपि सुखं प्रियवयस्यस्य ?

(३) कथमित एव प्रियवयस्यः सुसिद्धार्थकः । अपि सुखं प्रियवयस्यस्य ?

(४) अहो वयस्य ! कुतो मे सुखं, यस्य त्वं चिरकालप्रवासप्रत्यागतोऽपि, अज्ञापयित्वा वृत्तान्तम्, अन्यतो गतोऽसि इति ।

---

विभवे सम्पदि अपि सत्यपीत्यर्थः हृदयस्थिता मित्राणां विरहाः वियोगाः, आपानेषु पानगोष्ठीषु सन्तापयन्तः, तथा महोत्सवेषु रुजायन्तः पीड़यन्तः, अत एव दुर्मनायन्ते दुर्मनसः दुःखितमनसः कुर्वन्ति ॥ २ ॥

सिद्धा। पसीददु पसीददु पिअवअस्सो। अहं क्खु दिट्ठमेत्तो ज्जेव अज्जचाणक्केण आणत्तो, जधा, सिद्धत्थअ! गच्छ, एदं वुत्तन्तं पिअं पिअदंसणस्स देअस्स चन्दसिरिणो णिवेदेहि त्ति। तदो तस्स तं णिवेदिअ, एवं अणुभूद-पात्थिवप्पसादो, अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदो-म्हि। (५)

सुसिद्धा। वअस्स! जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं तं पिअं पिअदंसणस्स चन्दसिरिणो णिवेदिदं त्ति? (६)

सिद्धा। पिअवअस्स! तवापि किं असुणिदव्वं अत्थि? ता णिसामेहि। अत्थि दाव, अज्जचाणक्कणीदिमोहिद-मदिणा मलअकेदुहदएण णिराकरिअ रक्खसं, हदा चित्त-वम्मप्पमुहा पहाणा पञ्च पात्थिवा; तदो असमिक्खकारी

---

(५) प्रसीदतु प्रसीदतु प्रियवयस्यः। अहं खलु दृष्टमात्र एव आर्यचाणक्येन आज्ञप्तः, यथा, सिद्धार्थक! गच्छ, इमं वृत्तान्तं प्रियं प्रियदर्शनस्य देवस्य चन्द्रश्रियः निवेदयेति। ततस्तस्य तन्निवेद्य, एवमनुभूतपार्थिवप्रसादः, अहं प्रियवयस्यं प्रेक्षितुं तव गेहं चलितोऽस्मि।

(६) वयस्य! यदि मयेदं श्रोतव्यं भवति, तन्मामपि श्रावय, किं तत् प्रियं प्रियदर्शनस्य चन्द्रश्रियः निवेदितमिति?

(७) प्रियवयस्य! तवापि किमश्रोतव्यमस्ति? तन्निशामय। अस्ति तावत्, आर्य-चाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य राक्षसं, हताश्चित्रवर्मप्रमुखाः

एसो दुराआरो त्ति कदुअ, उज्झिअ मलअकेदुकडअभूमिं, णिअभूमिकुसलदाए भअविलोलसेअतणूकिदपरिवारेसु (क), सकं सकं बिसअं अभिप्पत्थिदेसु, पात्थिवेसु, भद्दभट-पुरुदत्त-हिङ्गुरात-बलउत्त-राअसेण-भागुराअण-रोहिदक्ख--बिजअवम्म-प्पमुहेहिं संजमिदो मलअकेदु। (७)

सुसिद्धा। बअस्स! भद्दभटप्पमुहा किल देअस्स चन्दसिरिणो अवरत्ता मलअकेदुं समास्सिदा त्ति लोए मन्तीअदि। ता किं णिमित्तं एदं कुकबिणाडअस्स बिअ अस्सं मुहे अस्सं णिव्वहणे (ख) त्ति ? (८)

---

प्रधानाः पञ्च पार्थिवाः। ततोऽसमीक्ष्यकारी एष दुराचार इति कृत्वा, उज्झित्वा मलयकेतुकटकभूमिं, निजभूमिकुशलतया भयविलोलसैन्यतनूकृतपरिवारेषु, स्वकं स्वकं विषयमभिप्रस्थितेषु पार्थिवेषु, भद्रभट-पुरुदत्त-हिङ्गुरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्म-प्रमुखैः संयमितो मलयकेतुः।

(८) वयस्य! भद्रभटप्रमुखाः किल देवस्य चन्द्रश्रियः अपरक्ता मलयकेतुं समाश्रिता इति लोके मन्त्र्यते। तत् किं निमित्तमेतत्, कुकविनाटकस्येव अन्यत् मुखे अन्यत् निर्वहणे इति ?

---

(क) मलयकेतुकटकभूमिं मलयकेतोः शिविरस्थानम्। निजभूमिकुशलतया निजाधिकारभूमिरक्षणे व्यग्रतया। भयविलोलसैन्यतनूकृतपरिवारेषु भयेन विलोलानि चञ्चलानि सैन्यानि भयविलोलसैन्यानि तैः तनूकृताः अल्पीकृताः परिवाराः येषां तेषु भेयप्रद्रुताधिकभागेषु इत्यर्थः।

(ख) मुखे मुखसन्धौ, प्रारम्भे इत्यर्थः। निर्वहणे उपसंहारे। उपक्रमोपसंहारयोः परस्परमेकरूपता नाटके प्रथिता इति, अत्र तु तद्वैपरीत्यं कथमिति प्रश्नार्थः।

सिद्धा। वअस्स! सुणु दाव, देवगदीए विअ असुणिद-गदीए णमो अज्जचाणक्कणीदीए (ग)। (९)

सुसिद्धा। वअस्स! तदो तदो? (१०)

सिद्धा। वअस्स! तदो प्पहुदि, सारसाहणसमुदएण इदो णिक्कमिअ, अज्जचाणक्केण पडिवण्णं अराअलोअं असेस-राअबलं (घ) (११)।

सुसिद्धा। वअस्स! कहिं? (१२)

सिद्धा। वअस्स! जहिं एदे,—

अदिसअगुरुएणं दाणदप्पेण दन्तो,
सजलजलदलीलामुव्वहन्तो णदन्ति।

---

(९) वयस्य! शृणु तावत्, देवगत्या इव अश्रुतगत्या नम आर्य्यचाणक्यनीत्या।

(१०) वयस्य! ततस्ततः?

(११) वयस्य! ततः प्रभृति, सारसाधनसमुदयेन इतो निष्क्रम्य, आर्य्यचाणक्येन प्रतिपन्नमराजलोकमशेषराजबलम्।

(१२) वयस्य! कुत्र?

(१३) वयस्य! यत्रैते,—

अतिशयगुरुणा दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो नदन्ति।

---

(ग) नमःस्वस्तीदिना चतुर्थीविधानेऽपि सम्बन्धविवक्षया षष्ठी।

(घ) ततः प्रभृतीत्यत्र ततः पश्चादिति पाठः समीचीनतया सङ्गच्छते। आर्य्यचाणक्येन इतः अस्मात् नगरात् निष्क्रम्य सारसाधनसमुदयेन उत्कृष्टोत्कृष्टसंग्रामोपकरणसमूहेन सह अराजलोकं राजरहितं राज्ञां स्वस्वविषयेषु प्रस्थितत्वादिति भावः अशेषराजबलं समस्तराजसैन्यं प्रतिपन्नम् अधिकृतम्।

कसपहरभएण जादकम्पा तुरन्ता
गहिदजअणसज्जा संपदन्ते तुरङ्गा (१३) ॥२॥

सुसिद्धा। वअस्स! सव्वं दाव चिट्ठदु; तह सव्वलोअस्स पच्चक्खं उज्झिआहिआरो भविअ, कहं अज्जचाणक्को पुणो वि तं ज्जेव मन्तिपदं आरूढो? (१४)

सिद्धा। वअस्स! अदिमुद्धो दाणीं सि तुमं, जो अमच्चरक्खसेण अणवगहिदपुव्वं अज्जचाणक्कबुद्धिं अवगाहिदुमिच्छसि। (१५)

सुसिद्धा। वअस्स! अध अमच्चरक्खसो दाणीं कहिं? (१६)

---

कशाप्रहारभयेण जातकम्पास्त्वरयन्तः
गृहीतजयनसज्जाः सम्पद्यन्ते तुरङ्गाः ॥

(१४) वयस्य! सर्वं तावत् तिष्ठतु। तथा सर्वलोकस्य प्रत्यक्षमुज्झिताधिकारो भूत्वा, कथमार्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः?

(१५) वयस्य! अतिमुग्ध इदानीमसि त्वम्, यः अमात्यराक्षसेन अनवगृहीतपूर्वामार्यचाणक्यबुद्धिमवगाहितुमिच्छसि।

(१६) वयस्य! अथ अमात्यराक्षस इदानीं कुत्र?

---

अतिशयगुरुणेति।—दन्तिनः हस्तिनः अतिशयगुरुणा अतिप्रवृद्धेन दानदर्पेण मदजलरूपगर्वेण सजलजलदलीला सजलानां घननीलानामित्यर्थः जलदानां लीलां सादृश्यम् उद्वहन्तः धारयन्तः सन्तः नदन्ति बृंहन्ति, तथा कशाप्रहारभयेण जातकम्पाः अत एव त्वरयन्तः स्वारोहिणस्त्वरावतः कुर्वन्तः तुरङ्गाः अश्वाः गृहीतजयनसज्जाः युद्धार्थं सज्जिताः सम्पद्यन्ते सन्नद्धा भवन्ति। अत्र गृहीतजयनसज्जानां सैन्याङ्गानां यथावद्वर्णनात् स्वभावोक्तिरलङ्कारः, स च कशाप्रहारेण जातकम्पाः अतः त्वरावन्तः इति पदार्थहेतुककाव्यलिङ्गेनानुप्राणितः ॥ २ ॥

सिद्धा । वअस्स ! सो क्खु तस्सिं प्पलअकोलाहले वट्टमाणे, मलअकेदुकडआदो णिक्कमिअ, उन्दुरणामहेएण चरेण अणुसरन्तो इमं ज्जेव कुसुमउरं आगदो त्ति अज्जचाणक्कस्स णिवेदिदं । (१७)

सुसिद्धा । वअस्स ! तह णाम अमच्चरक्खसो णन्दरज्जपच्चाणअणे किदव्ववसाओ णिक्कमिअ, सम्पदं अकिदत्थो पुणो वि कहं इमं ज्जेव कुसुमउरं आअदो ? (१८)

सिद्धा । वअस्स ! तक्केमि, चन्दणदासस्स सिणेहेण त्ति ( १९ ) ।

सुसिद्धा । वअस्स ! सच्चं चन्दणदासस्स सिणेहेण त्ति ? अध चन्दणदासस्स मोक्खं पेक्खसि ? (२०)

सिद्धा । वअस्स ! कुदो से अधण्णस्स मोक्खो ? सो क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए दुवेहिं पि अम्हेहिं वज्झट्ठाणं पवेसिअ वावादइदव्वो । (२१)

---

(१७) वयस्य । स खलु तस्मिन् प्रलयकोलाहले वर्तमाने, मलयकेतुकटकान्नि-ष्क्रम्य, उन्दुरनामधेयेन चरेणानुस्रियमाणः इदमेव कुसुमपुरमागत इति आर्यचाणक्यस्य निवेदितम् ।

(१८) वयस्य । तथा नाम अमात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य, साम्प्रतमकृतार्थः पुनरपि कथमिदं कुसुमपुरमागतः ?

(१९) वयस्य ! तर्कयामि, चन्दनदासस्य स्नेहेनेति ।

(२०) वयस्य ! सत्यं चन्दनदासस्य स्नेहेनेति ? अथ चन्दनदासस्य मोक्षं प्रेक्षसे ?

(२१) वयस्य ! कुतोऽस्य अधन्यस्य मोक्षः ? स खलु साम्प्रतमार्यचाणक्यस्य आज्ञया द्वाभ्यामपि आवाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः ।

सुसिद्ध । [सक्रोधम् ।] वअस्स ! किं अज्जचाणक्कस्स घादअअणो अस्सो णत्थि, जदो अह्मे इदिसे णिसंसे कम्मे णिजुञ्जीअदि ? (२२)

सिद्ध । वअस्स ! ण जीवलोए णिवसिदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि ; ता एहि, चंडालवेसधारिणो भविअ, चन्दणदासं वज्झट्ठाणं णेह्म । (२३)

[ इत्युभौ निष्क्रान्तौ । प्रवेशकः । ]

[ ततः प्रविशति रज्जुहस्तः पुरुषः । ]

पुरु ।

छग्गुणसंजोअदिढ़ा उवाअपरिवाडीघडिदपासमुही ।
चाणक्कणीदिरज्जू रिउसंजमणउजुआ जअदि ॥ ४ ॥

---

(२२) वयस्य ! किमार्य्यचाणक्यस्य घातकजनोऽन्यो नास्ति, यत आवाम् ईदृशे नृशंसे कर्मणि नियुनक्ति ?

(२३) वयस्य ! न जीवलोके निवस्तुकामः आर्य्यचाणक्यस्य आज्ञप्तिं प्रतिकूलयति । तदेहि, चण्डालवेशधारिणौ भूत्वा, चन्दनदासं बध्यस्थानं नयावः ।

(२४) षड्गुणसंयोगदृढ़ा उपायपरिपाटीघटितपाशमुखी ।
चाणक्यनीतिरज्जुः रिपुसंयमनऋजुका जयति ॥

---

षड्गुणसंयोगदृढेति ।—षड्भिः षड्गुणितैः गुणैः रज्जुभिः, सन्ध्यादिभिर्गुणैश्च "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" इत्यमरः ;संयोगेन सम्यक् योजनेन घटनेन सम्बन्धेन च दृढ़ा, तथा उपायानां कारणानां सामादीनाञ्च "सामदानभेददण्डमित्युपायचतुष्टयम्" इत्यमरः, परिपाट्या शृङ्खलया घटितं योजितं पाशरूपं मुखं यस्याः तादृशी, अत एव रिपूणां शत्रूणां संयमने सम्यग्बन्धने ऋजुका सरला अनुकूला इत्यर्थः चाणक्यनीतिरेव रज्जुः जयति सर्वोत्कर्षेण वर्त्तते । अन्यापि रज्जुः षड्गुणरचिता दृढा उभयतः पाशाकारग्रन्थिमती संयम्यबन्धनेऽनुकूला, इयं तु तदपेक्षयापि उत्कृष्टेत्यर्थः, तथाच चाणक्योपदिष्टेन मया गले रज्जुदानमिषेण राक्षसः संयमनीय इति भावः । श्लेषानिबद्धं रूपकम् ॥४॥

एसो सो अज्जचाणक्कस्स उन्दुरएण चरेण कधिदो प्पदेसो, जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो प्पेक्खिदव्वो । [ विलोक्य । ] कहं एसो क्खु अमच्चरक्खसो किदावगुण्ठणो इदो ज्जेव आअच्छदि । ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अन्तरिदसरीरो प्पेक्खामि, कहिं आसणपरिग्गहं करेदि त्ति (२४) (ङ) । [ परिक्रम्य तथा स्थितः । ]

[ ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः । ]

राक्ष । [ सबाष्पम् । ] कष्टं भोः कष्टम् !—
उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।

---

एष स आर्य्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः, यत्र मया आर्य्यचाणक्याज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः । कथमेष खलु अमात्यराक्षसः कृतावगुण्ठन इत एवागच्छति । तद् यावदेभिर्जीर्णोद्यानपादपैः अपवारितशरीरः प्रेक्षे, कुत्रासनपरिग्रहं करोतीति ।

---

(ङ) अपवारितशरीरः आच्छादितदेहः । प्रेक्षे पश्यामि । आसनपरिग्रहं करोति उपविशतीत्यर्थः ।

उच्छिन्नेति ।—उच्छिन्नः विनष्टः आश्रयः अवलम्बनं यस्याः सा अत एव कातरा श्रीः राजलक्ष्मीः कुलटा स्वैरिणीव गोत्रान्तरं वंशान्तरं गता आश्रयत्वेन प्राप्ता । यद्यपि मौर्य्यस्य नन्दजातत्वेन न तस्य गोत्रान्तरत्वं तथापि तस्य असवर्णाजातत्वेन स्वगोत्रप्रवर्त्तकत्वाभावात् नैकगोत्रता "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" इति अरयात् असवर्णाजातस्य पुत्रप्रतिनिधित्वाभावात् । प्रजाश्च त्यक्तानुरागाः मुक्तपूर्वस्वाम्यनुरागाः गतानुगतिकाः गतं पूर्वप्रस्थितम् अनुगच्छन्तीति गतानुगतिकाः अथवा गतस्य पूर्वैरनुसृतस्य वर्त्मनः इत्यर्थः अनुगतम् अनुगमनं विद्यते यासामिति ठन्, ताः गतानुगतिकाः गड्डलिकाप्रवाहवर्त्तिन्य इति भावः, तां श्रियमेव अनुगताः नन्दानुरागं त्यक्त्वा श्रीरिव

आप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्वन्त्वथवोत्तमाङ्गरहितैर्नागैश्चिरं स्थीयते ॥ ५ ॥

अपिच,—

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता च्छिद्रेण श्रीर्वृषलमविनीतेव वृषली ।
स्थिरीभूता चास्मिन् किमथ करवाम स्थिरमपि
प्रयातुं नो येषां विफलयति दैवं द्विषदिव ॥ ६ ॥

---

मौर्य्यानुरागिण्यः आप्तान्नित्यर्थः, आप्तैः विश्वस्तैरपि जनैः अनवाप्तपौरुषफलैः अप्राप्तपुरुषकारफलैः मद्भिः कार्य्यस्य स्वस्वाधिकृतस्य इत्यर्थः धूः भारः "धूः स्त्री स्याद् भारचिन्तयोः" इत्यमरः। उज्झिता त्यक्ता, अथवा ते आप्ता इति शेषः किं कुर्वन्तु ? यतः उत्तमाङ्गरहितैः मस्तकशून्यैः नागैः हस्तिभिः सर्पैर्वा चिरं स्थीयते एव न किमपि कार्य्यं कर्त्तुं शक्यते इत्यर्थः। अत्र प्रथमपादे उपमालङ्कारः, द्वितीये तृतीये च पादे त्यागक्रियाद्वयस्य "गतानुगतिकाः" "अनवाप्तपौरुषफलैः" इति हेतोः वाक्यपदार्थगतत्वात् काव्यलिङ्गम्। चतुर्थपादे तु "नाग" पद "उत्तमाङ्ग" पदं श्लिष्टं, यथा हि मस्तकहीनाः सर्पाः न किमपि कर्त्तुं शक्नुवन्ति एवं बुद्धिरूप-उत्तमाङ्ग-हीनाः प्रजाः अपि अकर्म्मण्या भवन्तीति बिम्बानुबिम्बभावप्रकटनात् दृष्टान्तालङ्कारः, "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति लक्षणात्। तदेतेषां संसृष्टिः। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

पतिमिति।—श्रीः राजलक्ष्मीः अविनीता दुश्चारिणी वृषली कुलटेव उच्चैः महान् अभिजनः वंशो यस्य तं महाकुलीनमित्यर्थः, भुवनपतिमशेषलोकपतिं देवं नन्दं पतिं त्यक्त्वा छिद्रेण छलेन ("करणे तृतीया" प्रकृत्यादित्वात् वा, ) वृषलं वृषं लाति नाशयतीति वृषलः तं मौर्य्यं गता आश्रिता, न केवलं तमनुगता अपि तु अचञ्चला सती अस्मिन् मौर्य्ये स्थिरीभूता च, "लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्। अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥" इति भावः। अथ प्रश्ने, अहोति पाठे—अह खेदद्योतकमव्ययम्। वयम् इति शेषः किं करवाम ? येषाम् अस्माकं प्रयातुं प्राप्तुं स्थिरमपि निश्चितमपि कार्य्यजातमिति शेषः, दैवं द्विषदिव द्वेषं कुर्वद्दिव विफलयति विफलां करोति। अत्र चञ्चलाया अपि लक्ष्म्याः

मया हि,—

> दैवे गते दिवमतद्विधमृत्युयोग्ये
> शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः ।
> तस्मिन् हते तनयमस्य, तथाप्यसिद्धिः
> दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥ ७ ॥

अहो ! विवेकशून्यता म्लेच्छस्य मलयकेतोः । कुतः ?

> यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिनः
> तेषां वैरिभिरक्षतः कथमसौ सन्धास्यते राक्षसः ?
> इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं
> दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्य्यस्यति ॥ ८ ॥

---

कृताङ्गनाऽधास्वस्यगुणग्रहणात्" तद्गुणालङ्कारः दैवद्विषदिवेत्युत्प्रेक्षाभासितः, तद्यथा— "तद्गुणः स्वगुणत्यागादन्युत्कृष्टगुणग्रहः ।" शिखरिणी वृत्तम् ॥ ६ ॥

दैवे इति ।—अतद्विधमृत्युयोग्ये तद्विधस्य तादृशस्य अनार्य्यचाणक्यकृतस्य इत्यर्थः मृत्योः मरणस्य योग्यो न भवतीति तादृशे अयोग्ये दैवे नन्दे दिवं स्वर्गं गते, तं शैलेश्वरम अधिकृत्य आश्रित्य प्रयत्नः वैरसाधनप्रयासः कृतः मयेति गद्यस्थमत्रान्वयि । ततः तस्मिन् शैलेश्वरे हते चाणक्येनेति शेषः, अस्य पर्वतेश्वरस्य तनयं मलयकेतुम् अधिकृत्य प्रयत्नः कृतः इति सर्वमत्रानुषज्यते । तथापि असिद्धिः कार्य्यसिद्धिर्न जाता इत्यर्थः, अतः दैव हि एव नन्दकुलशत्रुः, प्रतिकूलत्वात् घातक इव, असौ विप्रः चाणक्यो न शत्रुरित्यनुषङ्गः । पुनः पुनः महामतिसाहाय्योद्योगस्य वैफल्येन साधनकारणात् साध्यकार्य्यस्य निश्चयसम्धानात् अनुमानालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ७ ॥

य इति ।—यो राक्षसः नष्टान् मृतान् अपि स्वामिनः अधुनापि जीवनाशं प्राणान्तपर्य्यन्तं, (गोदोहमास्ते इत्यादिवत् भावस्य कर्मता) शुश्रूषते तत्कर्त्तव्यवैरनिर्यातनस्य सम्पादनाय प्रवर्त्तमानत्वात् तदाराधनमिव करोतीति भावः, असौ अक्षतः अविकृष्टदेहः राक्षसः तेषां स्वामिनां वैरिभिः शत्रुभिः सह कथं सन्धास्यते संगंस्यते ? न कथमपीत्यर्थः । वस्तुविवेकमूढेन सदसद्विवेकरहितेन म्लेच्छेन मलयकेतुना इत्थ पूर्वोक्तरूपं न आलोचित

तत् इदानीमपि तावत् अरातिहस्तगतो वनं गच्छेत् राक्षसो, न चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति ; अथवा कामम् असत्य-सन्ध इति, वरम् अयशो, न पुनः शत्रुवचनपरिभूतिः (च)। [ समन्तात् अवलोक्य सास्रम् । ] एतास्तावद् देवस्य पादचङ्क्रमणपरिचयपवित्रीकृतरथ्याः कुसुमपुरोपकण्ठभूमयः। इह हि,—

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजविततुरगं बाणमोक्षश्चलेषु।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्थं
सम्प्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥ ८ ॥

---

न विचारितम्, अथवा दैवेन भाग्येन उपहतस्य जनस्य बुद्धिः पूर्वमेव विपर्य्यस्यति विपरीता भवति। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

(च) असत्यसन्धः असत्यप्रतिज्ञः। शत्रुवचनपरिभूतिः शत्रूणां वचनेन परिभूतिः परिभवः तिरस्कार इत्यर्थः।

शार्ङ्गज्येति।—अत्र देशे देवेन नन्देन शार्ङ्गस्य धनुषः ज्यया मौर्व्या आकृष्टिः आकर्षणं तया हेतुना मुक्तः अत एव प्रशिथिलः अदृढः कविकाप्रग्रहः वल्गावग्रहणं येन तथाभूतेन सता चलेषु चञ्चलेषु लक्ष्येषु शरव्येषु मृगेषु इत्यर्थः प्रजविततुरगं प्रजवितः प्रकृष्टवेगः तुरगः यत्र तत् अत एव चित्रं यथा तथा बाणमोक्षः शरनिक्षेपः अकारि कृतः। वल्गावग्रहणमन्तरेण वेगवदश्वपृष्ठस्थितेन चञ्चललक्ष्ये शरनिक्षेपकरणम् आश्चर्य्यजनकम् इत्यभिप्रायेण चित्रमिति क्रियाविशेषणम्। अस्याम् उद्यानराजौ उपवनप्रदेशेषु तैः राजभिः सह स्थितम्, इह अस्मिन् प्रदेशे तैः सह कथितम् आलपितम्। सम्प्रति इदानीं तैः नन्दैः तत्पार्श्वचरैश्च राजभिर्विना इत्थम् एवंप्रकारेण आलोक्यमानाः दृश्यमानाः कुसुमपुरभुवः भूयसा आधिक्येन दुःखयन्ति दुःखवतः कुर्वन्ति अस्मानिति शेषः। दुःखवत्शब्दात् तत्करोतीत्यर्थे णिच्, णौ इष्ठवद्भावात् मतुपो लुक्। अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः, "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्"

तत् क्व खलु गच्छामि मन्दभाग्यः ? । [विलोक्य ।] भवतु, दृष्टमेतज्जीर्णोद्यानमत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तम् उपलप्स्ये । [परिक्रम्य स्वगतम् ।] अहो ! अलक्षितोपनिपाताः पुरुषाणां समविषमदशाविभागपरिणतयो (छ) भवन्ति । कुतः ?—

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः, शनैः
यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।
भूयः सम्प्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो
जीर्णोद्यानकमेष तस्कर इव त्रासाद् विशामि द्रुतम् ॥१०

---

इति काव्यप्रकाशोक्तेः, किञ्च—पूर्वनृपतेः चललक्ष्यवेधादिपक्वाङ्गतातीतवस्तुनः प्रत्यक्षायमाणत्वेन वर्णनात् भाविकालङ्कारोऽपि "अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः । यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥" इति दर्पणधृतलक्षणात्। अतः "यदि क्वचित् स्वभावोक्तावपि अस्याः विच्छित्तेः सम्भवः तदोभयोः सङ्करः" इति दर्पणकारोक्तेः भाविकस्वभावोक्त्योः सङ्करालङ्कारः स्फुटः एव । स्रग्धरा वृत्तम् ॥ ९ ॥

(छ) अलक्षितोपनिपाताः अलक्षितः अतर्कितः उपनिपातः आगमः यासां ताहृश्यः । समविषमदशाविभागपरिणतयः समाः समभावेन स्थिताः, विषमाः तद्विपरीताः या दशाः अवस्थाः तासां विभागाः तेषां परिणतयः परिपाकाः, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इत्युक्तेः, पुरुषाणाम् अवस्थाः कदा कीदृश्यः सम्पद्यन्ते इति कैरपि न तर्कयितुं शक्यते इत्याशयः ।

पौरैरिति ।—योऽहं पुरा राज्ञां सहस्रैः वृतः अत एव पौरैः पुरवासिभिः नवेन्दुना तुल्यं नवेन्दुवत् "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः, नवोदितः चन्द्र इव अङ्गुलिभिः शनैः निःशब्दं यथा तथा निर्दिश्यमानः सन् राजेव नृपतिरिव पुरात् नगरात् निरगमं निर्गतवानस्मि, सोऽहं सम्प्रति इदानीं वन्ध्यश्रमः विफलमनोरथः सन् तस्करः चौर इव (तत् करोति इति तस्करः "तद्बृहतोः करपत्योश्चौरदेवतयोः" इति सुट् तलोपश्च) भूयः पुनः तत्रैव नगरे जीर्णोद्यानकमेव न तु राजभवनं त्रासात् भयात् द्रुतं कम्पित

अथवा, येषां प्रसादादिदम् आसीत् ते एव न सन्ति। [नाट्येन प्रविश्य विलोक्य च।] अहो! जीर्णोद्यानस्य न अभिरमणीयता (ज)। अत हि,—

विपर्य्यस्तं सौधं कुलमिव महारम्भरचनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः।
फलैर्हीना वृक्षा विगुणविधियोगादिव नयाः
तृणैश्छन्ना भूमिर्मतिरिव कुनीत्या ह्यविदुषः॥ ११॥

---

पश्येदिति भिया शीघ्रं विशामि। इत्येकस्मिन् मयि दशायाः विभागपरिपाकस्य विभिन्नत्वेन दृष्टत्वात् प्राक् च तस्यानवगतेः अलक्षितोपनिपात इति समर्थितम्। अत्र नन्द-नरेन्द्र-शासनकालिकप्रभावातिशय्यप्रदर्शन-तच्छासनाभावकालिक-तस्करादिवह्नमणविन्यास-सामान्येनाप्रस्तुतेन, नन्दराज्यध्वंसः तदाश्रितानां दुरवस्थापरिणामश्च विशेषः प्रस्तुतः विबोध्यते इति अप्रस्तुतप्रशंसा नामालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ १०॥

(ज) अभिरमणीयता मनोहारित्वम्।

विपर्य्यस्तमिति।—महारम्भरचनं महता आरम्भेण उद्योगेन रचना यस्य तादृशं सौधं सुधाधवलं राजभवनादि कुलमिव विपर्य्यस्तम् अन्यथाभूतं पतितञ्च। सुहृदः नाशेन बन्धुवियोगेन साधोः हृदयमिव सरः शुष्कम्। विगुणविधियोगात् विगुणस्य प्रतिकूलस्य विधेर्भाग्यस्य योगात् दुर्दैववशात् इत्यर्थः नयाः नीतिप्रयोगा इव वृक्षाः फलैः शस्यैः कार्य्यैश्च हीनाः। कुनीत्या दुष्टनयेन हि अविदुषः अज्ञस्य जनस्य मतिः बुद्धिरिव भूमिः तृणैः छन्ना, मूर्खस्य मलयकेतोः बुद्धिः भागुरायणादीनाम् असदुपदेशैरत्यन्तं विकृतिं नीता इति सारनिष्कर्षः। अत्र बहूनाम् उपमानोपमेय-साधारणधर्म्माणाम् एकत्र सन्निवेशात् बहूपमा नामालङ्कारः। शिखरिणी वृत्तम्॥ ११॥

अपिच अत्र,

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ १२ ॥

एते च तपस्विनो वृक्षाः—

अन्तःशरीरपरिशोषमुपाश्रयन्तः,
कीटक्षतिं शुचमिवातिगुरुं वहन्तः।
छायावियोगमलिना व्यसने निमग्ना,
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥ १३ ॥

---

क्षताङ्गानामिति।—फणिनः सर्पाः तीक्ष्णैः कठिनैः उदग्रैः करालैः परशुभिः कुठारैः क्षताङ्गानां छिन्नावयवानां रुजा व्यथापीडया अविरतकपोतोपरुदितैः अविरतानि कपोतानां पारावतानाम् उपरुदितानि तैः लक्षणेन इत्यर्थः, कूजन्तीनाम् अव्यक्तशब्दं कुर्वतीनाम् इव (प्रतीयमानोत्प्रेक्षा) क्षितिरुहां वृक्षाणां शाखानां परिचितपरिक्लेशकृपया परिचितानां सततसङ्गिनामिति भावः, वृक्षाणां परिक्लेशेन या कृपा दया तया हेतुना श्वसन्तः दीर्घनिश्वासमिव त्यजन्तः सन्तः स्वनिर्मोकच्छेदैः निजकञ्चुकरूपवस्त्रखण्डैः व्रणमिव निबध्नन्ति आच्छादयन्ति संवृण्वन्तीति यावत्। यथा क्षतस्थाने वस्त्रबन्धनं स्वजनाः कुर्वन्ति, तथा सर्पाः चिरपरिचितवृक्षाणां कृपया कुर्वन्तीवेत्युत्प्रेक्षा। सा च प्रकृतेषु कूजितकपोतसङ्घेषु वृक्षशाखारूपोपमेयेषु छेदनकालिकमहार्तक्रन्दनाऽबलाधर्माणाम् उपमानसम्पदां समारोपाद्रूपकोज्जीविता इत्यवगन्तव्यम्। शोकाकुलः रावणः समदुःख-सुखस्य कस्यापि मित्रस्य समवेदनामर्थयते इति वस्तुध्वनिः। अन्योऽपि साधारणः कश्चित् स्वाश्रयदातुः क्षततासजन्यक्लेशदर्शनदुःखातुरः सततोच्छ्वासात् भृशं मुञ्चन् वस्त्रखण्डैः तद्व्रणं निबध्नाति इति समाधिः। शिखरिणी वृत्तम् ॥ १२ ॥

वृक्षाणां शोचनीयदशां वर्णयति—अन्तःशरीरैरिति। वृक्षाः अन्तःशरीरस्य शरीराभ्यन्तरस्य परिशोषं शुष्कताम् उपाश्रयन्तः प्राप्नुवन्तः, अतिगुरुम् अतिमहतीं शुचं शोकमिव कीटक्षतिं कीटैरुपघातं वहन्तः छायावियोगेन निष्पत्रतया छायाराहित्येन मलिनाः

तद्यावत् अस्मिन् विषमदशापरिणामसुलभे भग्नाग्रशिलातले (भ) मुहूर्त्तम् उपविशामि। [ उपविश्य आकर्ण्य च। ] अये! तत् किमयम् आकस्मिकः शङ्खपटहविमिश्रो नान्दीनादः श्रूयते। य एषः,—

प्रकुर्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया,
बहुत्वात् प्रासादैः सपदि परिपीतोज्झित इव।
अहो! नान्दीनादः पटुपटहशङ्खध्वनिमहान्
दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहल इव॥ १४॥

---

अप्रसन्नाः अत एव व्यसने विपदि वैराग्यरूपे इत्यर्थः निमग्नाः कृतवैराग्यावलम्बना इव श्मशानम् पितृवनम् उपगन्तुं मरणार्थमिति भावः, प्रवृत्ताः उद्यताः उद्युक्ताः इति यावत्। सततसुनिरोधवारहितानाम् उद्यानतरूणां, मन्दाया शोकेनेव अनुगन्तुं कृतव्यवसायता उत्प्रेक्ष्यत इति उत्प्रेक्षालङ्कारः। स च, ग्रामविच्छेदकातराणां लोकानां मरणव्यवसायाचरणरूपं व्यवहारम् उत्थापयतीति समासोक्तिं ध्वनयति। वसन्ततिलकं वृत्तम्॥ १३॥

(भ) विषमदशापरिणामसुलभे विषमा या दशा दुरवस्था इत्यर्थः, तस्याः परिणामः परिणतिः शेषभागः तत्र सुलभे। भग्नाग्रशिलातले भग्नम् अग्रं यस्य तादृशं यत् शिलातलं प्रस्तरखण्डः तस्मिन्।

प्रकुर्वन्निति।—गुरुतया महत्तया श्रोतॄणां श्रुतिपथं श्रवणविवरम् असारं नास्ति सारः स्थिरांशः प्रभूतशब्दश्रवणशक्तिर्यस्य तम् अतिदुर्बलं पूर्णतया अपरश्राव्ये अक्षममित्यर्थः कुर्वन्, बहुत्वात् बाहुल्यात् प्रासादैः राजभवनादिभिः सपदि झटिति परिपीतोज्झितः आदौ परिपीतः पश्चात् उज्झितः परित्यक्तः उद्वान्त इव, बहुत्वपाने तथा सम्भवादिति भावः, पटुपटहशङ्खध्वनिमहान् पटूनां दृढानां पटहानां वाद्यभेदानां शङ्खानाञ्च ध्वनिभिः महान् प्राप्तमहिमा नान्दीनादः अभ्युदयाशीर्वचनशब्दः सकौतूहलः कौतुकवान् इव दिशां दैर्घ्यं द्रष्टुं प्रसरति समन्तात् गच्छति। अत्र कौतुकौत्सुक्येन प्रेरित इव आयामदर्शनाभिलाषी अतिचण्डः नान्दीनादः दिङ्मण्डलमापूरयतीत्युत्प्रेक्ष्यते इत्यतिशयोक्तिमूल उत्प्रेक्षालङ्कारः। शिखरिणी वृत्तम्॥ १४॥

[ विचिन्त्य । ] आं, ज्ञातम्, एष हि मलयकेतुसंयमनकृतं राजकुलस्य । [ इत्यर्द्धोक्ते । ] मौर्य्यकुलस्य अधिकपरितोषं पिशुनयति (ञ) । [ सवाष्पम् । ] कष्टं भोः ! कष्टम् ।—

आवितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः ।
अनुभावयितुं मन्ये, यत्नः सम्प्रति मां विना ॥ १५ ॥

पुरु । आसीणो अअं । ता जाव अज्जचाणक्कस्स आणत्तिं संपादेमि । (२५)

[ राक्षसमपश्यन्निव तस्याग्रतो रज्ज्वा पाशेन आत्मानम् उद्बध्नाति । ]

राक्ष । [ विलोक्य स्वगतम् । ] अये ! कथम् अयमात्मानम् उद्बध्नाति ? नूनम् अहमिव दुःखितः तपस्वी । भवतु, पृच्छामि एनम् । [ उपसृत्य प्रकाशम् । ] भद्र भद्र ! किम् इदम् अनुष्ठीयते ?

पुरु । [सवाष्पम् ।] अज्ज ! जं पिअवअस्सविणासदुःखिदो अह्मारिसो मन्दभाओ जणो अणुचिट्ठदि । (२६) (ट)

---

(२५) आसीनोऽयम् । तद् यावदार्य्यचाणक्यस्य आज्ञप्तिं सम्पादयामि ।

(२६) आर्य्य । यत् प्रियवयस्यविनाशदुःखितः अस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति ।

---

(ञ) पिशुनयति सूचयति ।

आवित इति ।—अत्र मां विनेति पाठः कथमपि सङ्गच्छते, शत्रोः श्रियं आवितोऽस्मि । मां विना सम्प्रति अभिनीय व्यञ्जकहेतूनुपन्यस्य अनुभावयितुं बोधयितुं यत्नो दर्शित इति मन्ये । अत्र मामग्रमिति पाठः समीचीनतया प्रतिभाति, तथा च अहं शत्रोः श्रियं आवितः, अभिनीय समीपमानीय दर्शितश्च अस्मि दैवेनेति शेषः, सम्प्रति माम् अनुभावयितुं बोधयितुं यत्नमनुसर्तुमिति शेषः, अयं यत्नः दैवस्येति शेषः इति मन्ये सम्भावयामि । अप्रीतार्थं चालङ्कारः । अनुष्टुप् वृत्तम् ॥ १५ ॥

(ट) तदेवानुष्ठीयते इत्युत्तराशयः ।

राक्ष। [ स्वगतम्। ] प्रथममेव तावत् मया ज्ञातं, नूनम् अहमिव अयमार्त्तः तपस्वी। भवतु, पृच्छामि एनम्। [ प्रकाशम्। ] भद्र! व्यसनसब्रह्मचारिन्! यदि गुह्यं न अतिभारिकं (ठ) वा, ततः श्रोतुम् इच्छामि, किं ते प्राण-परित्यागकारणम्?

पुरु। [ निरूप्य। ] अज्ज! ण रहस्सं, ण वा अतिगुरुअं, किन्तु ण सक्‌णोमि पिअवअस्सविणासदुक्खिदहिअओ एत्तिअमेत्तम्मि मरणस्स कालहरणं कादुं। ( २७ )

राक्ष। [ निश्वस्य आत्मगतम्। ] कष्टम् एतेषु सुहृद्-व्यसनेषु परवत् उदासीनाः प्रत्यादिश्यामहे ( ड ) वयमनेन। [ प्रकाशम्। ] भद्र! यदि न रहस्यं, न अतिगुरु वा, तत् पुनः श्रोतुम् इच्छामि, कथ्यतां का गतिः दुःखस्येति। ( ढ )

पुरु। अहो! णिब्बन्धो अज्जस्स, का गदी एसो णिवेदेमि, अत्थि एत्थ णअरे मणिआरसेट्ठी जिण्हुदासो णाम। ( २८ )

---

(२७) आर्य्य! न रहस्य, न वा अतिगरुक किन्तु न शक्नोमि प्रियवयस्य-विनाश-दुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुम्।

(२८) अहो! निर्बन्धः आर्य्यस्य, का गतिः एष निवेदयामि, अस्ति अत्र नगरे मणिकारश्रेष्ठी जिष्णुदासो नाम।

---

(ठ) व्यसनसब्रह्मचारिन् व्यसनेन विपदा सब्रह्मचारिन्! सहाध्यायिन्! समान-व्यसन इत्यर्थः। अतिभारिकम् अतिमहत्। अतिभाराय हितम् आतिभारिकम् अतिगुरुक-मित्यर्थः, यद्वा अतिभारः अस्य अस्ति इति अतिभारिकं मत्वर्थीयः ठन्, अतः इनि-ठनौ।

(ड) परवत् परेण तुल्यम् उदासीनाः अकृतप्रतीकाराः इत्यर्थः। प्रत्यादिश्यामहे निराक्रियामहे तिरस्क्रियामहे इति यावत्।

(ढ) का गतिः? किं कारणम्? गम्यतेऽस्मात् गतिः प्राणत्यागस्य दुःखस्य प्राप्ति-कारणमित्यर्थः।

राच। [स्वगतम्।] अस्ति जिष्णुदासः चन्दनदासस्य परं मित्रम्। [प्रकाशम्] किं तस्य?

पुरु। सो मम प्पिअवअस्सो। (२९)

राच। [सहर्षम् आत्मगतम्।] अये! प्रियवयस्य इत्याह। हन्त! अत्यन्तसन्निकृष्टसम्बन्धः ज्ञास्यति चन्दनदासस्य वृत्तान्तम्। [प्रकाशम्] भद्र! किं तस्य?

पुरु। [सवाष्पम्।] संपदं सो दीणजणदिस्सविहवो जलणं प्पविसिदुकामो णअरादो णिक्कन्तो। ता अहं पि जाव तस्स प्पिअवअस्सस्स असुणिदव्वं ण सुणेमि ताव अत्ताणं उव्वन्धिअ वावादेमि त्ति इमं जिस्सुज्जाणं आअदो। (३०)

राच। भद्र! अथ अग्निप्रवेशे तव सुहृदः को हेतुः?—

किमौषधपथातिगैः उपहतो महाव्याधिभिः—? (थ)

पुरु। अज्ज! णहि णहि। (३१)

राच। किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा—?॥ (द)

(२९) स मम प्रियवयस्यः।

(३०) साम्प्रतं स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरात् निष्क्रान्तः। तद् अहमपि यावत् तस्य प्रियवयस्यस्य अश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति जीर्णोद्यानमागतः।

(३१) आर्य्य! नहि नहि।

(थ) किमौषधपथातिगैरिति।—औषधपथातिगैः औषधपथं प्रतीकार्य्यतारूपम् अतिगच्छन्ति तादृशैः औषधाप्रतिविधेयैः महाव्याधिभिः महारोगैः उपहतः आक्रान्तः किम्? अप्रतीकार्य्यरोगस्य असह्यतया तदाक्रान्तस्य मरणव्यवसायसम्भवादिति भावः।

(द) किमिति।—अग्निविषकल्पया अग्नितुल्यया विषतुल्यया च नरपतेः राज्ञः क्रुधा कोपेन निरस्तः प्रताडितः किम्? गुरुतरराजदण्डभयादपि लोकस्य मरणव्यवसायप्रदर्शितदर्शनादिति भावः।

पुरु। अज्ज! सन्तं पावं, सन्तं पावं। एदं णत्थि, चन्द-उत्तस्स जणवदेसु अणिसंसा पडिवत्ती। (थ) (३२)

राक्ष। अलभ्यमनुरक्तवान् किमयमन्यनारीजनम्—? (द)।

पुरु। [कर्णौ पिधाय।] अज्ज! सन्तं पावं, सन्तं पावं। अभूमि क्खु एस विणअणिधाणस्स सेट्ठिजणस्स, विसेसदो जिस्णुदासस्स। (३३) (ध)

राक्ष। किमस्य भवतो यथा सुहृद एव नाशो विषम्

(न) ॥१६॥

पुरु। अज्ज! अध इं? (३४)

राक्ष। [सावेगम् आत्मगतम्।] चन्दनदासोऽस्य सुहृदः प्रियसुहृत्तमः, तस्य प्रियसुहृद्विनाश एव अग्निप्रवेशहेतुरिति, यत् समाकुलित एव अस्मि सुहृत्स्नेहपक्षपातिना हृदयेन। [प्रकाशम्।] भद्र! तस्यापि तव सुहृदः सुचरितं विस्तरेण श्रोतुम् इच्छामि।

---

(३२) आर्य्य! शान्तं पापं, शान्तं पापम्। इदं नास्ति चन्द्रगुप्तस्य जनपदेषु अनृशंसा प्रतिपत्तिः।

(३३) आर्य्य! शान्तं पापं, शान्तं पापम्! अभूमिः खलु एष विनयनिधानस्य वणिग्जनस्य, विशेषतो जिष्णुदासस्य।

(३४) आर्य्य! अथ किम्?

---

(थ) इदं राजकर्तृकक्रोधेन निराशात् मरणव्यवसायः नास्ति, यतः जनपदेषु चन्द्रगुप्तस्य प्रतिपत्तिः व्यवहारः अनृशंसा अघातुका, लोकहिंसाजनकत्वाभावात् तद्व्यवहारस्य।

(द) अलभ्यमिति।—अयं तव बन्धुः अलभ्यं दुर्लभम् अन्यनारीजनं परकीयां कान्ताम् अनुरक्तवान् किम्? यदासक्तमनसस्तदप्राप्तौ वैराग्येणापि मरणप्रवृत्तिसम्भवादिति भावः।

(ध) विनयनिधानस्य वणिग्जनस्य एष परनारीजनः अभूमिः अनुरागाविषयः खलु।

(न) किमिति।—यथा भवतः सुहृदो मित्रस्य नाश एव विषं तथा अस्य किम्? ॥१६॥

पुरु। अज्ज ! अदो अवरं ण सक्णोमि मन्दभाओ मरणस्स विग्घमुप्पादेदुं । (३५)

राच । श्रवणीयां कथां कथयतु भद्रमुखः ।

पुरु। का गदी ? एसो क्खु णिवेदेमि, णिसामेदु अज्जो ( ३६ )।

राच । भद्र ! दत्तावधानोऽस्मि ।

पुरु। अत्थि, जाणादि अज्जो, एत्थ णअरे मणिआरसेट्ठी चन्दणदासो णाम । ( ३७ )

राच । [ सविषादम् आत्मगतम् । ] एतत् तदपावृतमस्मद्विनाशदीक्षाप्रकाशद्वारं दैवेन । (प) हृदय ! स्थिरीभव । किमपि ते कष्टतरम् आकर्णनीयम् । [ प्रकाशम् । ] भद्र ! श्रूयते मित्रवत्सलः स साधुः । किं तस्य ?

पुरु। सो अ तस्स जिण्णुदासस्स प्पिअवअस्सो होदि (३८)।

राच । [ स्वगतम् । ] अयमत्यन्तः शोकवज्रपातो हृदयस्य । [ प्रकाशम् । ] ततस्ततः ?

पुरु। तदो जिण्णुदासेण प्पिअवअस्सस्स सिणेहसरिसं अज्ज विसज्जो चन्दउत्तो । (३९)

---

(३५) आर्य्य ! अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम् ।

(३६) का गतिः । एष खलु निवेदयामि, निशामयतु आर्य्यः ।

(३७) अस्ति, जानाति आर्य्यः इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम ।

(३८) स च तस्य जिष्णुदासस्य प्रियवयस्यो भवति ।

(३९) ततो जिष्णुदासेन प्रियवयस्यस्य स्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः ।

---

(प) अस्मद्विनाशस्य दीक्षाया उपदेशस्य प्रकाशद्वारं बहिर्द्वारं दैवेन भाग्येन एतदपावृतम् उद्घाटितम् ।

राक्ष। कथय किमिति ?

पुरु। देव ! अत्थि मे गेहे कुटुम्बभरणपज्जत्तो अत्थो। तस्स विणिमयेण मुञ्चदु मे प्पिअवअस्सो चन्दणदासो त्ति। (४०) (फ)

राक्ष। [स्वगतम्।] साधु जिष्णुदास ! साधु। अहो ! दर्शितो मित्रस्नेहः। कुतः ?—

पितॄन् पुत्राः पुत्रान् परवदभिसन्धाय पितरो,
यदर्थं सौहार्दं, सुहृदि च समुज्झन्ति सुहृदः।
प्रियं सद्यस्त्यक्तुं व्यसनिनि वयस्ये व्यवसितः
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥१७॥

[प्रकाशम्।] भद्र ! ततस्तथाभिहितेन सता किं प्रतिपन्नं मौर्य्येण ?

---

(४०) अस्ति मे गेहे कुटुम्बभरणपर्य्याप्तोऽर्थः। तस्य विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति।

---

(फ) कुटुम्बभरणपर्य्याप्तो नाधिकः तेन तस्य अत्याज्यत्वेऽपि सुहृन्मोचनाय दातव्यताकथनात् अतीवात्मनः सुहृद्विपदुद्धारैकप्रवणता सूचिता।

पितॄनिति।—यदर्थं यस्मै इदं यदर्थं यद्धननिमित्तमित्यर्थः क्रियाविशेषणमिदं पुत्राः पितॄन्, पितरः पुत्रान्, सुहृदश्च सुहृदि परवत् परेण तुल्यम् अभिसन्धाय प्रतार्य्य सौहार्दं स्नेहं (सुहृदो भावः सौहार्दं "हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च" इत्युभयपदवृद्धिः) समुज्झन्ति त्यजन्ति। वयस्ये प्रियसुहृदि व्यसनिनि विपन्ने सति त्वं प्रियमपि यम् अर्थं सद्यः सहसा त्यक्तुं व्यवसितः उद्यतः। अतः वणिजः तव वाणिज्येऽपि वणिग्जनस्य अर्थममताया दुष्परिहार्य्यत्वादिति भावः, सः अयम् अर्थः कृतार्थः सफल इत्यर्थः। अत्र हि अर्थस्य कारणात् पुत्रादयोऽपि पित्रादिना त्यज्यन्ते इत्यादिना प्रतीतप्रकृष्टगुणः अर्थस्य उत्कर्षातिशयमुक्त्वा व्यसनिबन्धुजीवनरक्षायाः उपमानत्वकल्पनात् द्वितीयः प्रतीपालङ्कारः, स च अर्थस्य कृतार्थतासमर्थनरूपेण अर्थान्तरन्यासेन संसृष्टः। शिखरिणी वृत्तम् ॥ १७ ॥

पुरु। अज्ज! तदो एवं भणिदेण चन्दउत्तेण पडिभणिदो सेट्ठी जिण्हुदासो। जिण्हुदास! ण मए अत्थस्स कालणेण सेट्ठी चन्दणदासो संजमिदो, किन्तु पच्छादिदो अणेण अमच्चरक्खसस्स घरअणो, बहुसो जाचिदेणावि ण समप्पिदो त्ति। ता जइ अमच्चरक्खसस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो। अस्सधा, पाणहरो से दण्डो अत्तकोपं पडिमाणेदुत्ति। अस्सो वि अणो जधा एवं ण करइस्सदि त्ति भणिअ, वज्झट्ठाणं आणीदो। तदो जाव पिअवअस्सस्स चन्दणदासस्स असुणिदव्वं ण सुणेमि, ताव ज्जेव अत्ताणअं वावादेमि त्ति, जलणे पविसिदुकामो सेट्ठी जिण्हुदासो णअरादो णिग्गदो। अहं वि जाव पिअवअस्सस्स जिण्हुदासस्स असुणिदव्वं ण सुणेमि, ताव उब्बन्धिय अत्ताणअं वावादेमि त्ति, इमं जिण्हुज्जाणं आगदोह्मि (४१)?

राक्ष। न खलु व्यापादितः चन्दनदासः?

पुरु। अज्ज! ण दाव वावादीअदि। सो क्खु संपदं पुणो

---

(४१) आर्य्य! तत एवं भणितेन चन्द्रगुप्तेन प्रतिभाषितः श्रेष्ठी जिष्णुदासः। जिष्णुदास! न मया अर्थस्य कारणेन श्रेष्ठी चन्दनदासः संयमितः, किन्तु प्रच्छादितोऽनेन अमात्यराक्षसस्य गृहजनो बहुशो याचितेनापि न समर्पित इति। तद् यदि अमात्यराक्षसस्य गृहजनं समर्पयति, तदस्ति तस्य मोक्षः। अन्यथा, प्राणहरस्तस्य दण्डोऽस्मत्कोपं प्रतिमानयतु इति। अन्योऽपि जनो यथा एवं न करिष्यतीति भणित्वा, वध्यस्थानमानीतः। ततो यावत् प्रियवयस्यस्य चन्दनदासस्य अश्रोतव्यं न शृणोमि, तावदेवात्मानं व्यापादयामीति, ज्वलने प्रवेष्टुकामः श्रेष्ठी जिष्णुदासो नगरान्निर्गतः। अहमपि यावत् प्रियवयस्यस्य जिष्णुदासस्य अश्रोतव्यं न शृणोमि, तावदुद्बध्य आत्मानं व्यापादयामीति, इदं जीर्णोद्यानमागतोऽस्मि।

(४२) आर्य्य! न तावत् व्यापाद्यते। स खलु साम्प्रतं पुनः पुनः अमात्य-

पुणो अमच्चरक्खसस्स घरजणं जाचीअदि । ण सो मित्तवच्छलदाए जाचीअन्तो वि तं समप्पेदि । ता एदिणा कालणेण होदि से मरणस्स कालहरणं । (४२)

राक्ष । [ सहर्षम् आत्मगतम् । ] साधु वयस्य ! चन्दनदास ! साधु, साधु ।—

शिवेरिव समुद्भूतं शरणागतरक्षया ।
विचीयते त्वया साधो ! यशोऽपि सुहृदा विना ॥१८॥

[प्रकाशम् ।] भद्र ! भद्र ! गच्छ शीघ्रमिदानीं जिष्णुदासं ज्वलनप्रवेशात् निवारय । अहमपि चन्दनदासं मरणात् (ब) मोचयामि ।

पुरु । अध, केण उण उवाएण अज्जो चन्दणदासं मरणादो मोचेदि ? (४३)

---

राक्षसस्य गृहजनं याच्यते । न स मित्रवत्सलतया याच्यमानोऽपि तं समर्पयति । तदेतेन कारणेन भवति तस्य मरणस्य कालहरणम् ।

(४३) अथ केन पुनरुपायेन आर्य्यः चन्दनदासं मरणान्मोचयति ।

---

शिवेरिवेति ।—हे साधो ! त्वया सुहृदा मया विनापि शरणागतरक्षया शरणागतस्य मत्परिजनस्य रक्षया आत्मविनाशमनापीति भावः शिवेरिव, शिविराजस्येव समुद्भूतम् उपन्नं यशः विचीयते उपार्ज्यते । श्लोकेऽस्मिन् इवकारः अपिकारश्च भिन्नक्रमः शिवेर्यश इव सुहृदा विनापि इत्यन्वयः । अत्र सुहृदा विना इति कथनेन अयाचितस्याप्याश्रयादर्शभूतस्वाविचारस्य शरणापन्नराक्षसपरिजनस्य आत्मप्राणदानेनापि रक्षां प्रकुर्व्वतः चन्दनदासस्य उपमेयस्य शरणार्थिप्रार्थनया शरीरदातुः उपमानात् शिवेरप्याधिक्यसम्पादनात् व्यतिरेकालङ्कारः । अनुष्टुप् वृत्तम् ॥ १८ ॥

(ब) ज्वलनप्रवेशात् अत "ध्रुवमपायेऽपादानम्" इत्यपादानत्वात्पञ्चमी । मरणात् इत्यत्र "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात् पञ्चमी बोध्या ।

राक्ष । [ खड्गम् आकृष्य । ] ननु अनेन व्यवसायमहासुहृदा (भ) निस्त्रिंशेन । ननु, पश्य,—

निस्त्रिंशोऽयं विगतजलदव्योमसङ्काशमूर्त्तिः
युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण ।
सत्त्वोत्कर्षात् समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद् विवशमथवा साहसे मां नियुङ्क्ते ॥१९॥

पुरु । अज्ज ! एवं सेट्ठिचन्दणदासजीविदं होदि त्ति सुणिदं, विसमदसाविभागपरिणामपड़िदो ण सक्कणोमि णिच्चिदपदं भणिदुं । [ विलोक्य पादयोर्निपत्य । ] अध, सुगि-

(४४) आर्य्य ! एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुतं, विषमदशाविभाग-

(भ) व्यवसायमहासुहृदा इत्यत्र व्यसनमहासुहृदा इति पाठः सङ्गच्छते ।

निस्त्रिंश इति ।—विगतजलदव्योमसङ्काशमूर्त्तिः विगतः अपगतः जलदः यस्मात् तादृशं मेघावरणशून्यमित्यर्थः यद् व्योम आकाशं तत्सङ्काशा तत्सदृशी मूर्त्तिः यस्य तथोक्तः कृष्णवर्ण इत्यर्थः । युद्धश्रद्धापुलकित इव युद्धश्रद्धया संग्रामादरेण पुलकितः रोमाञ्चित इव हृष्ट इवेत्यर्थः करेण मम हस्तेन प्राप्तसख्यः चिरपरिचितत्वात् सञ्जातस्नेह करधृत इत्यर्थः परैः शत्रुभिः मे मम सत्त्वोत्कर्षात् बलातिशयात् समरनिकषे समर एव निकषः परीक्षाप्रस्तरविशेषः तस्मिन् दृष्टः सारः बलं यस्य तादृशः अयं निस्त्रिंशः खड्गः ( निर्गतः त्रिंशतोऽङ्गुलिभ्यः इति निस्त्रिंशः "संख्यायास्तत्पुरुषस्य वाच्यः" इति समासान्तः डच् ) विवशं व्याकुलमपि मां मित्रस्नेहात् मित्रस्य चन्दनदासस्य स्नेहात् साहसे सहसा बलेन कर्त्तव्यकार्य्ये युद्धव्यापारे इत्यर्थः नियुङ्क्ते प्रेरयति । अत्र बलोत्कर्षेण समरे परीक्षितसारः अत एव युद्धश्रद्धापुलकितः जातरोमाञ्च इव इति काव्यलिङ्गानुप्राणितोत्प्रेक्षालङ्कारः । मन्दाक्रान्ता वृत्तं "मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात् ॥ १९ ॥

होदणामधेया अमच्चरक्खसपादा तुम्हे त्ति, ता करेहि मे, प्पसादं संदेहणिण्णएण। (४४)

राक्ष। भद्र! सोऽहम् अनुभूतभर्तृवंशविनाशः सुहृद्विनाश-हेतुः अनार्य्यो स्ट्टहीतनामा यथार्थो राक्षसः।

पुरु। [सहर्षं पुनः पादयोर्निपत्य।] प्पसीदध, प्पसीदध। होमाणहे! दिट्ठिआ कदत्थोह्मि। (४५)

राक्ष। भद्र! उत्तिष्ठ उत्तिष्ठ, अलमिदानीं कालहरणेन, निवेद्यतां जिष्णुदासाय, यथैष राक्षसः चन्दनदासं मरणात् मोचयति इति। [निस्त्रिंशोऽयमित्यादि पठन् आकृष्टखड्गः परिक्रामति।]

पुरु। [पादयोर्निपत्य।] प्पसीदन्तु प्पसीदन्तु अमच्चरक्खस-पादाः। अत्थि दाव एत्थ णअरे पढमं चन्दउत्तहदएण अज्ज-सअडदासस्स वधो आणत्तो। सो अ केणावि वज्झट्ठाणादो अवहरिअ, देसन्तरं अवआहिदो। तदो चन्दउत्तहदएण कीस प्पमादो किदोत्ति अज्जसअडदासवधवञ्चणाए समुज्जलिदो रोसग्गी घादअजणवधजलेण णिव्वाविदो। तदो पहुदि,

---

परिणामपतितो न शक्नोमि निश्चितपदं भणितुम्। अथ सुगृहीतनामधेया अमात्य-राक्षसपादा यूयमिति, तत् कुरु मे प्रसादं सन्देहनिर्णयेन।

(४५) प्रसीदत प्रसीदत। आश्चर्य्यं! दिष्ट्या कृतार्थोऽस्मि।

(४६) प्रसीदन्तु प्रसीदन्तु अमात्यराक्षसपादाः। अस्ति तावदत्र नगरे प्रथमं चन्द्रगुप्तहतकेन आर्य्यशकटदासस्य वध आज्ञप्तः। स च केनापि वध्यस्थाना-दपहृत्य देशान्तरमपवाहितः। ततश्चन्द्रगुप्तहतकेन कस्मात् प्रमादः कृतः इति आर्य्यशकटदासवधवञ्चनया समुज्ज्वलितो रोषाग्निर्घातकजनवधजलेन निर्वापितः।

घादआ जं कं पि गहीदसत्थं अपुव्वं पुरिसं अग्गदो पच्छादो वा पेक्खन्ति, तदो अद्धवहे ज्जेव अत्तणो जीविदं परिरक्खन्तो अप्पमत्ता एदे अवाप्तवज्झट्ठाणं वज्झं वावादेन्ति। ता एव्वं गहीदसत्थेहिं अमच्चपादेहिं तहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स वहो तुवराइदो होदि (४६)। [निष्क्रान्तः।]

राक्ष। [स्वगतम्।] अहो! दुर्बोधश्चाणक्यवटोर्नीतिमार्गः। कुतः?—

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं,
किमिति निहतस्तेन क्रोधाद् वधाधिकृतो जनः?
अथ स कृतकं तादृग्लेखं कथं नु विभावयेत्
इति मम मतिस्तर्काकूढा न पश्यति निश्चयम्॥ २०॥

---

ततः प्रभृति घातका यं कमपि गृहीतशस्त्रम् अपूर्वं पुरुषमग्रतः पश्चाद्वा प्रेक्षन्ते, तदा अर्धपथ एवात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता एते अवाप्तवध्यस्थानं वध्यं व्यापादयन्ति। तस्मादेवं गृहीतशस्त्रैः अमात्यपादैः तत्र गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधः त्वरायितो भवति।

---

यदीति।—यदि शत्रोः चाणक्यस्य मतेन अभिप्रायेण दृढचारणाभ्यर्थेन स शकटः वध्यस्थानात् अपवाह्य इति शेषः मम अन्तिकं समीपं नीतः, तदा क्रोधात् तदपसारणप्रमादजनितादिति भावः, तेन वधाधिकृतः घातकः जनः किमिति कथं निहतः? स्वाभिप्रायसम्पादनेन घातकस्य अपराधाभावादिति भावः। अथ पक्षान्तरे स सिद्धार्थकः तादृक् कृतकं कूटं मिथ्याभूतं लेखं कथं विभावयेत् प्रकटयेत्? नु वितर्के मम मतिः इति इत्थं तर्काकूढा सती निश्चयं न पश्यति अधुनापि सन्देहदोलामारोहतीत्यर्थः। अत्र हि निश्चयाभावरूपवस्तुनस्तर्काकूढमतित्वरूपस्य हेतोः वाक्यार्थत्वात् काव्यलिङ्गमलङ्कारः। तत्र प्रथमपादावधि तृतीयपादपर्यन्तगतानुमानालङ्कारेण संसृज्यते। हरिणी वृत्तम्॥ २०॥

[विचिन्त्य ।] तस्मात्,—

नायं निस्त्रिंशकालः, प्रथममिह कृते घातकानां विघाते,
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्य्यमत्र ।
औदासीन्यं न युक्तं, प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं, ज्ञातमस्मिन् स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥२१॥

[इति निष्क्रान्ताः सर्वे ।]

[ इति षष्ठोऽङ्कः । ]

---

नायमिति ।—अयं निस्त्रिंशकालः निस्त्रिंशस्य तद्व्यापारस्य कालः समयः न, यतः प्रथमं मत्खड्गचालनात् पूर्वं घातकानां ( कृद्योगे कर्त्तरि षष्ठी ) घातकै-रित्यर्थः विघाते चन्दनदासस्येति शेषः वधे कृते सति अस्य वैफल्यमिति शेषः । यदि च नीतिः खड्गधारणविषया इत्यर्थः कालान्तरेण अन्यः कालः कालान्तरं तेन (अपवर्गे तृतीया) फलं प्रकटयति, अत अस्मिन् विषये चन्दनदासमोचरूपे तया नीत्या किं फलम् ? न किमपीत्यर्थः । मत्कृते मम निमित्तं प्रियसुहृदि अतिघोरां व्यापत्तिं विपदं गते सति औदासीन्यञ्च तटस्थतया निःसम्पर्कतया इत्यर्थः अवस्थानं न युक्तं नोचितम्, अतः अस्मिन् विषये अहम् इमां स्वतनुं निजशरीरं निष्क्रयं चन्दनदासस्य मोचनमूल्यं कल्पयामि ददामीति अस्मिन् विषये ज्ञातं बुद्धं सिद्धान्तितमित्यर्थः । अत्र स्वशरीरमूल्य-दानेन प्रियसुहृदं मोचयामीति विनिमयेनेष्टसाधनात् परिवृत्तिनामालङ्कारः । तल्लक्षणं यथा—"परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।" इति । स्रग्धरा वृत्तम् ॥ २१ ॥

इति षष्ठोऽङ्कः ।

---

# सप्तमोऽङ्कः ।

[ ततः प्रविशति चण्डालः । ]

चण्डा । ओसलध अज्जा ! ओसलध, अवेध माणहे ! अवेध,—

जइ लक्खिदुं मणइं प्पाणे, विहवे, कुले, कलत्ते अ ।
पलिहलध से बिसं विअ लाआपत्थं प्पअत्तेण ॥१॥

अविअ,—

होदि पुलिसस्स व्वाही मलणं वा, सेविदे अपत्थेवि ।
लाआपत्थे उण सेविदे हि सअलं कुलं मलदि ॥२॥ (१)

ता जइ ण प्पत्तिआअध, तदा पेक्खध एदं लाआपत्थकालिणं सेट्ठिचन्दणदासं बज्झट्ठाणं आणीअमाणं सपुत्तकलत्तं। [ आकाशे । ] अज्जा ! किं भणाध ? अत्थि किं चन्दणदासस्स मोक्खोवाओ त्ति ? कुदो से अधस्स मोक्खोवाओ ? एदं उण अत्थि, सो जइ अमच्चरक्खसस्स घरअणं समप्पेदि । [ पुनराकाशे । ] किं भणाध ? ऐसे सलणागदवच्छले अत्तणो जीवि-

---

(१) अपसरत हे आर्य्याः ! अपसरत, अपेत मान्याः ! अपेत,—

यदि रक्षितुं मन्यध्वं प्राणान्, विभवान्, कुलानि, कलत्राणि च ।
परिहरत तस्मात् विषमिव राजापथ्यं प्रयत्नेन ॥ १ ॥

अपिच,—भवति पुरुषस्य व्याधिर्मरणं वा सेविते अपथ्येऽपि ।
राजापथ्ये पुनः सेविते हि सकलं कुलं म्रियते ॥ २ ॥

(२) तद् यदि न प्रत्ययध्वं, तदा प्रेक्षध्वम् एनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं बध्यस्थानमानीयमानं सपुत्रकलत्रम् । आर्य्याः ! किं भणथ ? अस्ति किं तस्य चन्दनदासस्य मोचोपाय इति ? कुतस्तस्य अधन्यस्य मोचोपायः ? इदं पुनरस्ति,

दस्स कालगेण ईरिसं अकज्जं करिस्सदि त्ति ? अज्जा ! जइ एव्वं तेण हि अवधारेध से असुहगदिं । एत्तिके दाणीं तुह्माणं पडीआले (२) ।

[ ततः प्रविशति द्वितीयचण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेन आदाय कुटुम्बिन्या पुत्रेण च अनुगम्यमानः चन्दनदासः । ]

कुटु । हद्धी ! हद्धी ! अह्मारिसाणं वि कधं णिच्चचारित्तभङ्गभीरूणं चोरजणाणं विअ मरणं पत्तं त्ति । णमो णमो किदन्तस्स । अह वा णिसंसाणं उदासीणेसु इदरेसु (क) वा विसेसो अत्थि ? तधाहि,—

मोत्तूण आमिसाइं मरणभएण तिणेहिं जीवन्ति ।
वाहाणं मुद्धहरिणे हन्तुं को णाम णिब्बन्धो ॥ ३ ॥

---

स यदि अमात्यराक्षसस्य गृहजनं समर्पयति । किं भणथ ? एष शरणागतवत्सल आत्मनो जीवितस्य कारणेन ईदृशमकार्य्यं करिष्यतीति ? आर्य्याः ! यद्येवं तेन हि अवधत्त तस्य अशुभगतिम् । एतावान् इदानीं युष्माकं प्रतीकारः ।

(२) हा धिक्, हा धिक् ! अस्मादृशानामपि कथं नित्यचारित्रभङ्गभीरूणां चौरजनानामिव मरणं प्राप्तमिति । नमो नमः कृतान्ताय । अथवा नृशंसानाम् उदासीनेषु इतरेषु वा विशेषोऽस्ति ? तथाहि,—

मुक्त्वा आमिषाणि मरणभयेन तृणैर्जीवन्ति ।
व्याधानां मुग्धहरिणान् हन्तुं को नाम निर्बन्धः ॥ ३ ॥

---

(क) अथवा नृशंसानां दुर्जनानाम् । उदासीनेषु तटस्थेषु निःसम्पर्कतया अवस्थितेषु निरीहेषु इत्यर्थः । इतरेषु सदोषेषु इत्यर्थः ।

मुक्त्वेति ।—ये हरिणा आमिषाणि मुक्त्वा मरणभयेन तृणैर्जीवन्ति तान् मुग्धहरिणान् हन्तुं व्याधानां को नाम निर्बन्धः आग्रहः यत्नातिशय. ? न कोऽपि इत्यर्थः ॥ ३ ॥

[समन्तात् अवलोक्य।] भाव ! प्पिअवअस्स ! जिष्णुदास ! कधं प्पडिवअणं वि मे ण प्पडिवज्जसि त्ति। अहवा, दुल्लहा क्खु ते पुरिसा, जे इमस्सिं काले दिट्ठिवधे वि चिट्ठन्ति (३)।

चन्द। [सवाष्पम्।] एदे अह्मप्पिअवअस्सा अस्सुवादमेत्तकेण किदप्पदीआरा स्वसरीरेहिं णिवत्तमाणा परिवड्ढमाण-सोअदीणवदणा, वाप्फगरुआए दिट्ठीए मं अणुगच्छन्ति (४)।

चण्डालौ। [परिक्रम्य अवलोक्य च।] अज्ज ! चन्दण-दास ! प्पच्चागदोसि वज्झट्ठाणं, ता विसज्जेहि घरजणं (५)।

चन्द। अज्जे ! कुटुम्बिणि ! णिवत्तस्स तुमं सपुत्ता। वज्झट्ठाणं क्खु एदं, अदो अवरं अभूमि क्खु (ख) अणुगच्छि-दुम् (६)।

---

भाव ! प्रियवयस्य ! जिष्णुदास ! कथं प्रतिवचनमपि मे न प्रतिपद्यसे इति। अथवा दुर्लभाः खलु ते पुरुषाः, ये अस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति।

(४) एतेऽस्मत्प्रियवयस्याः अश्रुपातमात्रेण कृतप्रतीकाराः स्वशरीरैर्निवर्त्तमानाः परिवर्द्धमानशोकदीनवदनाः वाष्पगुर्व्या दृष्ट्या माम् अनुगच्छन्ति।

(५) आर्य्य ! चन्दनदास ! प्रत्यागतोऽसि वध्यस्थानं, तत् विसर्जय गृहजनम्।

(६) आर्य्ये ! कुटुम्बिनि ! निवर्त्तस्व त्वं सपुत्रा। वध्यस्थानं खलु इदम्, अतोऽपरं अभूमिः खलु अनुगन्तुम्।

---

(ख) अभूमिः अस्थानम् अयोग्यस्थानमित्यर्थः।

कुटु। [सवाष्पम्।] परलोअं पत्थिदो अज्जो, ण उण देसन्तरं, ता अजोग्गो दाणीं एसो कुलजणस्स णिवत्तिदुं (७)।

चन्द। अज्जे! सच्चं, मित्तकज्जेण मम विणासो, ण पुरिसदोसेण। ता किं हरिसट्ठाणे वि रोदसि त्ति? (८)

कुटु। अज्ज! जइ एव्वं ता अणुचिदं दाणीं कुलजणेण णिवत्तिदुं (९)।

चन्द। अध इं व्ववसिदं (ग) अज्जाए? (१०)

कुटु। [सवाष्पम्।] भत्तुणो चलणमणुगच्छन्तीए अज्जाणुग्गहो होदु (११)।

चन्द। अज्जे! दुव्ववसिदं एदं दे, ता दाणीं अज्जाए अअं असुणिदलोअव्ववहारो कुमारो अणुगेह्निदव्वो त्ति (१२)।

---

(७) परलोकं प्रस्थितः आर्य्यः, न पुनर्देशान्तरं, तदयोग्यमिदानीम् एतत् कुलजनस्य निवर्त्तितुम।

(८) आर्य्ये! सत्यं, मित्रकार्य्येण मम विनाशो न पुरुषदोषेण। तत् किं हर्षस्थानेऽपि रोदिषि इति?

(९) आर्य्य! यद्येवं तदनुचितम् इदानीं कुलजनेन निवर्त्तितुम्।

(१०) अथ किं व्यवसितम् आर्य्यया?

(११) भर्तुश्चरणमनुगच्छन्त्याः आर्य्यानुग्रहो भवतु।

(१२) आर्य्ये! दुर्व्यवसितमिदं ते, तदिदानीम् आर्य्यया अयम् अश्रुतलोकव्यवहारः कुमारोऽनुगृहीतव्य इति।

---

(ग) किं व्यवसितं किं कर्त्तुम् इष्टमित्यर्थः।

कुटु। अणुगेह्लन्तु णं प्पसरणाओ भअवदीओ कुलदेवदाओ। जाद! पुत्तअ! प्पणम अपच्छिमस्स (घ) पिदुणो पाएसु (१३)।

पुत्र। [पादयोर्निपत्य।] ताद! मए तादविरहिदेण किं अणुचिट्ठिदव्वं? (१४)

चन्द। पुत्त! चाणक्कविरहिदे देसे वसिदव्वं (१५)।

चण्डालौ। अज्ज! चन्दणदास! णिखादे शूले, ता दाणीं सज्जो होहि (१६)।

कुटु। अज्जा! पलित्ताअध पलित्ताअध (१७)।

चन्द। भद्दमुह! मुहुत्तअं चिट्ठ। अइ जीविदवच्छले! किं एत्थ आक्कंदसि? सग्गं गदा क्खु ते देवा णन्दा। जे दुक्खिदं इत्थीआजणं प्पइदिणं अणुकम्पन्ति (१८)।

प्रथमश्चण्डालः। अले वेणुवेत्तका! गेह्ण इमं चन्दणदासं। घलजणो स्सअं ज्जेव गमिस्सदि (१९)।

---

(१३) अनुगृह्णन्तु एनं प्रसन्ना भगवत्यः कुलदेवताः। जात! पुत्रक! प्रणम अपश्चिमस्य पितुः पादयोः।

(१४) तात! मया तातविरहितेन किमनुष्ठातव्यम्?

(१५) पुत्र! चाणक्यविरहिते देशे वस्तव्यम्।

(१६) आर्य्य! चन्दनदास! निखातं शूलं, तत् इदानीं सज्जो भव।

(१७) आर्य्याः! परित्रायध्वं परित्रायध्वम्।

(१८) भद्रमुख! मुहूर्त्तं तिष्ठ। अयि जीवितवत्सले! किमत्र आक्रन्दसि? स्वर्गं गताः खलु ते देवाः नन्दाः, ये दुःखितं स्त्रीजनं प्रतिदिनम् अनुकम्पन्ते।

(१९) अरे वेणुवेत्रक! गृहाण इमं चन्दनदासम्। गृहजनः स्वयमेव गमिष्यति।

---

(घ) अपश्चिमस्य पुनरागमनशून्यस्य।

द्वितीयश्चण्डालः । अले वज्जलोमआ ! एसे गेह्णामि (२०) ।

चन्द । भद्दमुह ! चिट्ठ मुहुत्तअं, जाव पुत्तअं परिस्सआमि । [ इति पुत्रं परिष्वज्य मूर्ध्नि समाघ्राय । ] जाद ! पुत्तअ ! अवस्सं भविदव्वे वि विणासे मित्तकज्जं समुव्वहमाणो विणासमणुभवामि (२१) ।

पुत्र । ताद ! एदं क्खु भणिदव्वं, किं कुलक्कमो क्खु एसो अह्माणं (२२) ? [ इति पादयोः पतति । ]

चण्डा । अले ! गेह्ण वज्जलोमआ ! (२३) ।

[ चण्डालौ गृहीतः चन्दनदासम् आरोपयितुं शूलं । ]

कुटु । अज्जा ! पलित्ताअध पलित्ताअध (२४) ।

[ प्रविश्य अपटीक्षेपेण राक्षसः । ] भवति ! न भेतव्यं, न भेतव्यम् । भो भोः सेनापते ! न खलु व्यापादनीयः चन्दनदासः । कुतः ?—

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा,
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम् ।

---

(२०) अरे वज्रलोमक ! एष गृह्णामि ।

(२१) भद्रमुख ! तिष्ठ मुहूर्तं, यावत् पुत्रकं परिष्वजे । जात ! पुत्रक ! अवश्यं भवितव्येऽपि विनाशे मित्रकार्य्यं समुद्वहमानो विनाशमनुभवामि ।

(२२) तात ! इदं खलु भणितव्यं, किं कुलक्रमः खलु एषोऽस्माकम् ?

(२३) अरे गृहाण वज्रलोमक !

(२४) आर्य्याः ! परित्रायध्वं परित्रायध्वम् ।

---

येनेति ।—येन मया रिपोः शत्रोः कुलमिव विनश्यत् विनाशं गच्छत् स्वामिकुलं स्वामिनः नन्दस्य कुलं पुरा दृष्टं न तत्र प्रतिकृतमित्यर्थः, येन च मया मित्राणां बन्धूनां

आत्मा यस्य बधाय वः परिभवस्त्रीकृतोऽपि प्रियः
तस्येयं मम मृत्युलोकपदवी बध्यस्रगाबध्यताम् ॥४॥

चन्द। [विलोक्य सवाष्पम्।] अमच्च! किं एदं दे व्ववसिदं (२५)?

राक्ष। त्वदीयस्य सुचरितैकदेशस्य अनुकरणं किल।

चन्द। अमच्च! सव्वं वि मे णिप्फलं। एदं प्पआसं करन्तेण ण मे प्पिअं अणुचिट्ठिदं अमच्चेण (२६)।

राक्ष। सखे! चन्दनदास! कृतमुपालम्भेन, स्वार्थप्रधानो हि जीवलोकः। भद्रमुख! अयमर्थो निवेद्यतां तावद् दुरात्मने चाणक्याय।

चण्डालौ। अथ किं त्ति? (२७)।

---

(२५) अमात्य! किमिदं ते व्यवसितम?

(२६) अमात्य! सर्वमपि मे निष्फलम्, इमं प्रयास कुर्वता न मे प्रियमनुष्ठितम अमात्येन।

(२७) अथ किमिति?

---

व्यसने विपदि सत्यपि महोत्सवे इव स्वस्थेन प्रकृतिस्थेन अकातरेण इति यावत स्थितं न साहाय्यं कृतमित्यर्थः, यस्य मम आत्मा वः युष्माकं परिभवस्त्रीकृतः तिरस्कारपात्रीकृतोऽपि अपमानास्पदम् अपि इत्यर्थः प्रियः न विमुच्यते इत्यर्थः, तस्य मम कण्ठे इति शेषः बधाय ("तुमर्थाच्च भाववचनात्" इति चतुर्थी, ) मृत्युलोकपदवी यमलोकगमनमार्गरूपा इयं बध्यस्रग् बध्यस्य चिह्नभूता माला आबध्यतां आमुच्यतां, चन्दनदासं विहाय मां जहीत्यर्थः। शार्द्दूलविक्रीडित वृत्तम् ॥ ४ ॥

राक्ष।—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विना प्रलघुतामौशीनरीयं यशः।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः॥५॥

प्रथमः। अले वेणुवेत्तआ! तुमं दाव सेट्ठिचन्दणदासं गेह्णिअ, इमस्स मसाणपादवस्स छाआए मुहुत्तअं चिट्ठ, जाव अहं अज्जचाणक्कस्स णिवेदेमि, जधा गहीदो अमच्चलक्खसो त्ति (२८)।

द्वितीयः। अले वज्जलोमआ! एव्वं होदु (२९)।

[ इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः। ]

---

(२८) अरे वेणुवेत्रक! त्वं तावत् श्रेष्ठिचन्दनदासं गृहीत्वा, अस्य श्मशानपादपस्य छायायां मुहूर्त्तं तिष्ठ, यावदहम् आर्य्यचाणक्यस्य निवेदयामि, यथागृहीतोऽमात्यराक्षस इति।

(२९) अरे वज्रलोमक! एवं भवतु।

---

दुष्कालेऽपीति।—असज्जनरुचौ असज्जनानां दुर्जनानां रुचिः अनुरागः यत्र तादृशे अत एव दुष्कालेऽपि दुष्टकालेऽपि कलौ प्राणैः निजप्राणदानेन परम् अन्यं जनं रक्षता येन यशस्विना कीर्त्तिमता चन्दनदासेन औशीनरीयं शिविराजगतं यशः प्रलघुतां अत्यन्तहीनतां क्रमेणा इत्यर्थः नीतं प्रापितं न्यक्कृतमित्यर्थः। शिविना सत्ययुगे तथाचरितेऽपि कलियुगे तथाचरणं दुष्करमेवातोऽस्य शिवितोऽप्याधिक्यमिति व्यतिरेकालङ्कारः। तथा विशुद्धात्मना निर्दोषस्वभावेन येनेत्यनुषङ्गः चन्दनदासेन सुचरितैः अहिंसादिभिः बुद्धानां बुद्धप्रोक्तमधीयानानाम्, ( प्रोक्तार्थतद्धितस्य बहुवचने लुक् ) चेष्टितं व्यवहारः क्लिष्टं तिरस्कृतं, पूजार्हः सम्मानार्हः अपि स यत्कृते यस्य राक्षसस्य कृते निमित्तं यत्कुटुम्बत्राणार्थेत्यर्थः, तव वध्यत्वं गतः प्राप्तः, स एषः राक्षसः अस्मि वध्यस्थाने उपस्थित इति शेषः। [ एष इत्यत्र एत इति पाठे—एतः आगत इत्यर्थः ] शार्दूलविक्रीडितं वृत्तम्॥५॥

प्रथमः । [राक्षसेन सह परिक्रम्य ।] के के एत्थ दुआलिआणं ? णिवेदेध दाव, णन्दकुलसेणसच्चअचुण्णकुलिसस्स मोरिअकुलपदिट्ठाविदधम्मसच्चअस्स अज्जचाणक्कस्स (३०) ।

राक्ष । [स्वगतम् ।] एतदपि नाम राक्षसेन श्रोतव्यम् !

चण्डा । एसो क्खु अज्जणीदिणिअमसंजमिदबुद्धिपुलिसआले गहीदे अमच्चरक्खसे त्ति (३१) ।

[ ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यः सहर्षः चाणक्यः । ]

चाण । भद्र ! कथय, कथय ।—

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी ?
पाशैः केन सदागतेरगतिता सद्यः समासादिता ? ।
केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे ?
भीमः केन चलैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ? ॥६॥

---

(३०) कः कोऽत्र दौवारिकाणाम् ? निवेदयत तावत्, नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य मौर्य्यकुलप्रतिष्ठापितधर्म्मसञ्चयस्य आर्य्यचाणक्यस्य ।

(३१) एष खलु आर्य्यनीतिनियमसंयमितबुद्धिपुरुषकारो गृहीतोऽमात्यराक्षस इति ।

---

केनेति ।—उत्तुङ्गशिखाकलापकपिलः उत्तुङ्गानाम् उन्नतानां शिखानां ज्वालानां कलापेन संहत्या कपिलः पिङ्गलः समुद्दीपित इत्यर्थः शिखी अग्निः पटान्ते वसनप्रान्ते केन जनेन बद्धः धृतः ? सदागतेः सततगमनशीलस्य पवनस्य अगतिता गतिशून्यता गतिरोधः इति यावत्, सद्यः सहसा पाशैः रज्जुग्रन्थिभेदैः केन समासादिता प्रापिता ? कृता इत्यर्थः । अनेकपदानवासितसटः अनेकपानां द्विपानां दानेन मदसलिलेन वासिता सुरभीकृता सटा जटा यस्य तादृशः ("सटा जटाकेशरयोः" इत्यमरः) मत्तकरीन्द्रघाती सिंहः, केन जनेन पञ्जरे अर्पितः स्थापितः ? बद्धः इत्यर्थः । चलैकनक्रमकरः चलाश्चञ्चलाः एके महान्तः नक्राः मकराश्च यत्र तथाभूतः अत एव भीमः भयङ्करः अर्णवः समुद्रः केन जनेन दोर्भ्यां भुजाभ्यां ( न वहित्रादिना ) प्रतीर्णः ? आतङ्कस्य राक्षसस्य संयमनं पटाञ्चलेन वह्निबन्धनमिव रज्ज्वा वायुगतिरोधनमिव

चण्डा। णं णीदिणिउणबुड्ढिणा अज्जेण ज्जेव (३२)।

चाण। भद्र! मा मैवम्। नन्दकुलद्वेषिणा दैवेन इति ब्रूहि।

राक्ष। [विलोक्य स्वगतम्।] अये! अयं स दुरात्मा, अथवा अयं स महात्मा कौटिल्यः! यतः,— (ङ)

आकरः सर्वशास्त्राणां, रत्नानामिव सागरः।
गुणैर्न परितुष्यामो, यस्य मत्सरिणो वयम्॥ ७॥

चाण। [विलोक्य सहर्षम्।] अये! अयम् अमात्य-राक्षसः! येन महात्मना—

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः।
चिरमायासिता सेना वृषलस्य, मतिश्च मे॥ ८॥

---

(३२) ननु नीतिनिपुणबुद्धिना आर्य्येणैव।

---

पञ्जरे मत्तहस्तिघातिसिंहबन्धनमिव तथा बाहुभ्यां दुष्पारसमुद्रोत्तरणमिव दुष्करमिति समुदायार्थः। राक्षसस्य दुर्द्दमत्वकथनेन आत्मना च तस्य दमनात् आत्मनोऽतीव दुष्करकार्य्यकारित्वेन गर्वः सूचित इति भावः। अत्र अतिशयोक्त्यनुप्राणिताप्रस्तुतप्रशंसा-लङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ६॥

(ङ) स्वयं चाणक्यस्य दुरात्मत्वमभिधाय अथवेत्यनेन तदपोह्य यत् तस्य माहात्म्य-सूत्रं तत् समर्थयितुं हेतुमुपन्यस्यति यत इत्यादि।

आकर इति।—रत्नानां सागर इव सर्वशास्त्राणां तज्ज्ञानानाम् आकरः खनिः पारदृश्वेत्यर्थः। वयं मत्सरिणः अन्यशुभद्वेषिणः यस्य गुणैः यस्य चाणक्यस्य गुणैः न परितुष्यामः परितोषं लभामहे, अतिगुणवान् अयमिति वदाम इत्यर्थः। उपमालङ्कारः। अनुष्टुप् वृत्तम्॥ ७॥

गुरुभिरिति।—दीर्घजागरहेतुभिः दीर्घजागरे सततप्रतीकारचिन्ताहेतुत्वात् साव-धानत्वे अनालस्ये इति यावत्। अथवा दीर्घजागरः महान् निद्राविरामः तस्य

[ अवनिकाम् अपनीय उपसृत्य च। ] भो भो अमात्यराक्षस! विष्णुगुप्तोऽभिवादयते।

राच। [स्वगतम्।] अमात्य इति लज्जाकरमिदम् इदानीं विशेषणपदम्। [प्रकाशम्।] भो भो विष्णुगुप्त! न मां श्वपाकस्पर्शदूषितं (च) स्प्रष्टुम् अर्हसि।

चाण। अमात्य! राक्षस! नायं श्वपाकः। अयं खलु दृष्टपूर्व एव भवता सिद्धार्थकनामा राजपुरुषः। योऽपि असौ द्वितीयः, सोऽपि सुसि(समि)द्धार्थकनामा राजपुरुष एव। ताभ्यामेव सह सौहार्द्दम् उत्पाद्य, शकटदासोऽपि तपस्वी (छ) तं तादृशम् अजानन् एव कपटलेखं मया एव लेखितः। (ज)

राच। [आत्मगतम्।] दिष्ट्या शकटदासं प्रति अपनीतो विकल्पः (झ)।

---

हेतुभिः साधनैः गुरुभिः महद्भिः कल्पनाक्रमैः एवमिदं करणीयम् एतच्च इत्थम् अकर्त्तव्यमित्येवंप्रकारैः मानसिकरचनाजनितदुःखैः वृषलस्य चन्द्रगुप्तस्य सेना मे मम मतिश्च चिरं दीर्घकालं व्याप्य आयासिता क्लेशिता, येनेति गद्यस्थं कर्त्तृपदमध्याहार्य्येति। अत्र "भेदेऽप्यभेदः सम्बन्धे सम्बन्धस्तद्विपर्य्ययौ। पौर्व्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः।" इत्यतिशयोक्तिभेदनिरूपणसूत्रे "कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययश्च द्विधा भवति, कारणात् प्रथमं कार्य्यस्य भावे द्वयोः समकालत्वे च" इति दर्पणकारोक्त्या अत्र वृषलस्य मतेश्च आयासप्राप्तिरूपकार्य्यस्य समकालसंघटनरूपपौर्व्वापर्य्यात्ययात् अतिशयोक्तिरलङ्कारः। अनुष्टुप् वृत्तम् ॥ ८ ॥

( च ) श्वपाकस्पर्शदूषितं श्वपाकश्चण्डालः तस्य स्पर्शेन दूषितः तम्।

(छ) तपस्वी अनपराधी प्रागुक्तकूटलेखस्याज्ञानता तेन लेखनेन दोषशून्यत्वात्।

(ज) मया हेतुकर्त्रा लेखितः लिखितवान्, लिखेर्ण्यन्तात् भावे क्तः, अर्थात् मया अपि लेखित इति सिद्धम्।

( झ ) अपनीतः निरस्तः अनेन वाक्येन इति शेषः। विकल्पः संशयः शकटदासेन तथा कृतं न वा इत्येवंप्रकारः।

चाण । किं बहुना, संक्षेपतः कथयामि ।—

ये ते भद्रभटादयः स च तथा लेखः, स सिद्धार्थकः
तच्चालङ्करणत्रयं, स भवतो मित्रं भदन्तः किल ।
जीर्णोद्यानगतः स चार्त्तपुरुषः क्लेशः स च श्रेष्ठिनः,
सर्वोऽसौ मम—" *** [ इत्यर्द्धोक्ते लज्जां नाटयति । ]
"—सर्वोऽसौ वृषलस्य वीर ! भवता संयोगमिच्छोर्नयः ॥९॥

तदेष वृषलस्त्वां द्रष्टुम् आगच्छति । पश्य एनम् ।

राक्ष । [ स्वगतम् । ] का गतिः ? [ प्रकाशम् । ] य एष पश्यामि (ञ) ।

[ ततः प्रविशति सेवकैः अनुगम्यमानो राजा । ]

राजा । [ स्वगतम् । ] विनैव युद्धाद् आर्य्येण पराजितं दुर्जयं रिपुकुलमिति, यत् सत्यं (ट) लज्जित इव अस्मि । मम—

---

ये ते इति ।—ये ते चन्द्रगुप्तादपरक्ताः सन्तः मलयकेतुमाश्रिताः भद्रभटादयः भद्रभट आदिर्येषां ते, आदिशब्दात् भागुरायणडिङ्गुरातादयः बोद्धव्याः, तथा स कृत्रिम इत्यर्थः लेखः, स सिद्धार्थकः, तच्च अलङ्करणत्रयं त्रयः अलङ्काराः, स च भवतः मित्रं सुहृद् भदन्तः बौद्धसन्न्यासी जीवसिद्धिः, जीर्णोद्यानगतः स च आर्त्तपुरुषः बन्धुवियोगदर्शनभयेन उद्बन्धनार्थं व्यवसित इत्यर्थः, श्रेष्ठिनः चन्दनदासस्य च स क्लेशः बध्यस्थाने बधार्थं नयनजनित इत्यर्थः, इत्युक्तसर्वव्यापाराणाम् आत्मकर्तृत्वसूचनाय आह—"सर्वोऽसौ मम" इति, ततः स्वमुखेन स्वोदात्तचरितवर्णनमनुचितं संचिन्त्य "सर्वोऽसौ मम" इत्यर्द्धमुक्त्वा तदपह्नुत्य च आह—वृषलस्य इत्यादि । हे वीर ! असौ उक्तरूपः सर्वः व्यापार इत्यर्थः भवता सह संयोगं सम्मेलनम् इच्छोः वृषलस्य चन्द्रगुप्तस्यैव नयः नीतिः कर्मेति यावत् भवत्प्राप्त्याशयैनैव सर्वमेतत् कृतं चन्द्रगुप्तेनैव न मयेति भावार्थः "सर्व्वोऽसौ मम" इति स्वाभीष्ट-सिद्धान्तानुकूलोक्त-पदविन्यासपक्षे—मन्त्रिवीर ! इति योजनया पादपूर्त्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

(ञ) य एष आगच्छतीति चाणक्यवाक्योक्तं क्रियापदम् अन्वेति । पश्यामीत्यत्र तम् इत्यध्याहार्य्यम् ।

(ट) "असन्दिग्धे तु यत् सत्यम्" इत्युक्तेः यत् सत्यमसन्दिग्धमित्यर्थः ।

फलयोगमवाप्य सायकाना-
मनियोगेन विलक्षतां गतानाम् ।
स्वशुचेव भवत्यधोमुखानां
निजतूणीशयनव्रतप्रतिष्ठा ॥ १० ॥

अथवा,—

विगुणीकृतकार्मुकोऽपि जेतुं
भुवि जेतव्यमसौ समर्थ एव ।
स्वपतोऽपि ममेव यस्य तन्त्रे
गुरवो जाग्रति कार्य्यजागरूकाः ॥ ११ ॥

[ चाणक्यम् उपसृत्य । ] आर्य्य ! चन्द्रगुप्तः प्रणमति ।

---

फलयोगमिति ।—अनियोगेन स्वकार्य्ये शत्रुवधादौ नियोगाभावेन विलक्षतां लक्ष्यभ्रष्टतां सलज्जतां च गतानां प्राप्तानाम् ( विलक्षतामित्यत्र विपक्षतां गतानां इति पाठे—प्रतिकूलत्वमुपेयुषामिति विरोधः कङ्कादिपक्षिपक्षविशिष्टतां प्राप्तानाम् इति विरोधभञ्जनम् तदंशे विरोधाभासालङ्कारः ) अत एव स्वशुचेव निजशोकेनेव अधोमुखानाम् अवनतावभावेन स्थितानां सायकानां बाणानां "मम" इति गद्यस्थं सम्बन्धिपदमत्रान्वेति । फलयोगं फलेन लौहमयाग्रकीलेन पुष्पादिरूपेण च योगं सम्बन्धम् अवाप्य प्राप्यापि निजतूणीशयनव्रतप्रतिष्ठा निजतूण्यां निजाधारे शरधौ यत् शयनं तदेव व्रतं तस्य प्रतिष्ठा समाप्तिर्भवति, यथा व्रतसमाप्तौ फलोत्पत्तिर्जायते तथैवात्र बाणानाञ्च तूणीशयनरूपे व्रते फलस्य विपुलयस्य योगात् प्रतिष्ठेव इत्युत्प्रेक्षणात् उत्प्रेक्षालङ्कारः । मालभारिणी वृत्तम् । "विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्" इति लक्षणात् ॥ १० ॥

विगुणीति ।—स्वपतः निद्रां गच्छतः राज्यचिन्तापराङ्मुखस्य यस्य मम इव तन्त्रे राष्ट्रचिन्तायां "तन्त्रः स्वराष्ट्रचिन्तायाम्" इति कोषः, गुरवः गुरुजनाः कार्य्यजागरूकाः कार्य्येषु जागरूकाः अवहिताः अप्रमत्ताः इति यावत् सन्तः जाग्रति यतन्ते प्रतिविधानपराः तिष्ठन्ति इत्यर्थः, असौ नृपः विगुणीकृतकार्मुकः मौर्वीशून्यधनुष्कः अधनुर्धरोऽपीत्यर्थः भुवि पृथिव्यां जेतव्यम् अरिम् जेतुं समर्थ एव अहमिव इति शेषः । काव्यलिङ्गानुप्राणितविभावनालङ्कारः । वृत्तं पूर्ववत् । अत्र चोपच्छन्दसिकमिति नामान्तरम् ॥ ११ ॥

चाण। वृषल! सम्पन्नाः ते सर्वाशिषः। तत् अभिवादयस्व तत्रभवन्तम् अमात्यराक्षसम्। पैतृकस्तव अयम् अमात्य-मुख्यः (ठ)।

राक्ष। [स्वगतम्।] योजितोऽनेन सम्बन्धः।

राजा। [राक्षसम् उपसृत्य।] आर्य्य! चन्द्रगुप्तोऽहम् अभिवादये।

राक्ष। [विलोक्य स्वगतम्।] अये! अयं चन्द्रगुप्तः! य एषः।—

बाल एव हि लोकेन सम्भावितमहोदयः।
क्रमेणारूढवान् राज्यं, यूथैश्वर्य्यमिव द्विपः ॥ १२ ॥

[प्रकाशम्।] राजन्! विजयस्व (ड)।

राजा। आर्य्य!—

जगतः किं न विजितं मयेति प्रविचिन्त्यताम्।
गुरौ षाड्गुण्यचिन्तायामार्य्ये त्वयि च जाग्रति ॥ १३ ॥

---

(ठ) पितृत आगतः पैतृकः, चन्द्रगुप्तस्य नन्देन मुरायामुत्पादितत्वात् तस्य नन्दामात्यत्वेन, तत्सम्बन्धात् पैतृकत्वम्; अमात्येषु मुख्यः अयं राक्षसः एनम् अभिवादयस्व इति निष्कर्षः।

बाल एवेति।—बाल एव शिशुरेव लोकेन सम्भावितमहोदयः सम्भावितः तर्कितः महान् उदयः यस्य तथाभूतः अत एव यूथैश्वर्य्यं यूथपतित्वं द्विपः हस्तिशावकः इव क्रमेण राज्यम् आरूढवान् प्राप। उपमाऽलङ्कारः। अनुष्टुप् वृत्तम् ॥ १२ ॥

(ड) विजयस्व "विपराभ्यां जेः" इत्यात्मनेपदम्।

जगत इति।—गुरौ चाणक्ये आर्य्ये पैतृकामात्यत्वादतीवमान्ये त्वयि च षाड्गुण्य-चिन्तायां षड्गुणा एव षाड्गुण्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्, सन्धिविग्रहादिव्यापारः तस्य चिन्तायां कर्त्तव्याकर्त्तव्यत्वभावनायां जाग्रति यतमाने सति मया जगतः किं न, जितम्? अपि तु सर्वमेव जितम् इति प्रविचिन्त्यताम् अवधार्य्यताम्। समं नामालङ्कारः। अनुष्टुप वृत्तम् ॥ १३ ॥

राक्ष । [स्वगतम् ।] स्पृशति मां कौटिल्यशिष्यो भृत्यभावेन, अथवा विनयेन एव, चन्द्रगुप्तस्य मत्सरस्तु मे विपरीतं कलयति (ढ) । सर्वथा स्थाने यशस्वी चाणक्यः । कुतः ?—

द्रव्यं जिगीषुमधिगम्य जडात्मनोऽपि
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा ।
अद्रव्यमेत्य तु विविक्तनयोऽपि मन्त्री
शीर्णाश्रयः पतति कूलजवृक्षवृत्त्या ॥ १४ ॥

चाण । अमात्य राक्षस ! अपि इष्यते चन्दनदासस्य जीवितम् ?

राक्ष । भो विष्णुगुप्त ! कः सन्देहः ?

चाण । अमात्य राक्षस ! अगृहीतशस्त्रेण भवता न

B.K.

(ढ) कौटिल्येन शिष्यः अनुशिष्ट इत्यर्थः ; कार्त्तवीर्य्यौ विजेय इत्यादिवत् भूते कृत्यप्रत्ययः । नैनायं स्वतो विनीतः किन्तु परप्रेरित इत्याशयः । भृत्यभावेन विनेयतया मां स्पृशति नवाहं विनेय इत्युक्ता अवलम्बते । आपाततः चन्द्रगुप्तस्य स्वतो विनयाभावमुक्त्वा तदपोह्य विनयेनैव तथाकथनमित्याह—विनयेनैवेति । न चाणक्योपदेशेनेत्येवकारव्यवच्छेद्योऽर्थः । चन्द्रगुप्तस्य चन्द्रगुप्ते यो मत्सरः मम शुभद्वेषः स एव तदुक्तं विपरीतम् अन्यथास्थितमन्यरूपेण कलयति अवगमयति ।

द्रव्यमिति ।—द्रव्यं सत्पात्रं जिगीषुम् अधिगम्य प्राप्य जडात्मनोऽपि अकुशलस्यापि नेतुः नायकस्य उपदेष्टुरित्यर्थः यशस्विनि यशःप्रदायके पदे स्थाने प्रतिष्ठा नियता, नियतमेव यशोलाभो भवेदित्यर्थः । मन्त्री विविक्तनयोऽपि विशुद्धनीतिप्रयोगचतुरोऽपि अद्रव्यम् अयोग्यपात्रं प्रभुमिति शेषः एत्य प्राप्य शीर्णाश्रयः सन् कूलजवृक्षवृत्त्या कूलजस्य तीरजातस्य वृक्षस्य या वृत्तिः वर्त्तनं नियमः तया पतति असिद्धकामः खेदातिशयं लभते इत्यर्थः । तथाच सत्पात्रत्वेन चन्द्रगुप्तस्य तदाश्रयेण चाणक्यस्य कार्य्यसिद्ध्या यशोलाभः, मलयकेतोः असत्पात्रत्वेन, सुतरां तदाश्रयेण न कार्य्यसिद्धिः प्रत्युत आत्मपतनमेव मम जातमित्याशयः । उपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ १४ ॥

अनुगृह्यते वृषल इत्यतः सन्देहः (ख)। तत् यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यताम् इदं शस्त्रम्।

राक्ष। भो विष्णुगुप्त! मा मैवम्। अयोग्या वयम् एतस्य ग्रहणे, विशेषतः त्वया गृहीतस्य शस्त्रस्य।

चाण। अ अमात्य राक्षस! योग्योऽहम् अयोग्यो भवान् इति कथमेतत्? पश्य,—

अश्वैः सार्द्धमजस्रदत्तकविकाक्षामैरशून्यासनान्
स्नानाहारविहारपानशयनस्वेच्छासुखैर्वर्जितान्।
माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः,
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान् ॥१५॥

---

(ख) नानुगृह्यते नानुकूलीक्रियते, कृतसन्धानस्य तत्कार्य्यकरणाय शस्त्रग्रहणस्य आवश्यकत्वात्। गृहीते च अमात्यपदस्वीकारसूचके शस्त्रे सन्धानं निश्चितं स्यात् अगृहीते सन्देह इति भावः।

अश्वैरिति।—दृप्तारिदर्पच्छिदः दृप्तानां गर्वितानाम् अरीणां दर्पं छिनत्तीति तस्य दृप्तशत्रुगर्वापहारिणः अतिपौरुषस्य अतिविक्रान्तस्य भवतः माहात्म्यात् वैभवात् अजस्रदत्तकविकाक्षामैः अजस्रम् अनवरतं दत्ताभिः मुखे योजिताभिः कविकाभिः वल्गाभिः क्षामैः क्षीणैः अश्वैः वाजिभिः सार्द्धम् अशून्यासनान् अशून्यानि आसनानि सादिभिरिति भावः येषां तान् युद्धार्थं सततसज्जितानित्यर्थः, स्नानादिभिः स्वेच्छासुखैः यथेच्छव्यापारैः वर्जितान् विरहितान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् परिकल्पनायाः रणसज्जाविशेषस्य व्यतिकरो येषां ते, प्रोच्छूनः महान् वंशो येषां ते, ततः कर्मधारयः, तथाभूतान् यद्वा परिकल्पनायाः रणसज्जाविशेषस्य व्यतिकरेण सम्पर्केण प्रोच्छूनाः महान्तः वंशाः पृष्ठस्थदण्डविशेषाः येषां तान् तथाभूतान् एतान् गजान् पश्य अवलोकय भवद्विक्रमप्रभावात् क्षणमपि सेनाङ्गस्याश्वादेर्न विश्राम इति तव नायोग्यता इति भावः। अत्रामात्यराक्षसस्य स्वनियुक्त-सामन्तवाहिनीपाते-सेनाङ्गानां सम्भ्रमवैक्लवविभासप्रकाशनेनैव चाणक्येनोच्यते इति भङ्ग्या तात्पर्य्यार्थद्योतनात् पर्य्यायोक्तालङ्कृतिः। वस्तुतः कारणे प्रस्तुते कार्य्यस्याभिधानात् अप्रस्तुतप्रशंसा एव इयम्। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

अथवा किमनेन ? न खलु भवतः शस्त्रग्रहणम् अन्तरेण चन्दनदासस्य जीवितमस्ति ।

राक्ष । [ स्वगतम् । ]

नन्दस्नेहकणाः स्पृशन्ति हृदये, भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव पाणिपयसा च्छेद्यास्त एव द्रुमाः ।
शस्त्रं मित्रशरीरकेषु सघृणा व्यापारणीयं, सदा
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ॥१६॥

[प्रकाशम् ।] भो विष्णुगुप्त ! उपानय खड्गम् । नमः सर्वकार्य्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय । का गतिः ? एष सज्जोऽस्मि ।

चाण । [ सहर्षं शस्त्रम् अर्पयित्वा । ] वृषल ! वृषल ! अमात्यराक्षसेन इदानीं गृहीतशस्त्रेण अनुगृहीतः दिष्ट्या वर्द्धते भवान् ।

राजा । आर्य्यप्रसाद एष चन्द्रगुप्तेन अनुभूयते ।

---

नन्दस्नेहकणा इति ।—नन्दस्नेहकणाः नन्दानां स्नेहस्य कणाः लेशाः तेषां विनाशेन तदन्वयस्य अन्यस्यापि उच्छिन्नप्रायत्वाच्च स्नेहकणा इत्युक्तम्, इदानीमपि तेषां मृतत्वेऽपि तद्गुणस्मरणेन भक्तवत्सलत्वेन च हृदये स्पृशन्ति सम्बध्नन्ति, तत् कथं तेषां नन्दानां विद्विषां भृत्योऽस्मि भरणीयः दासतामाप्तः स्यामित्याशयः । ये द्रुमाः मलयकेतुप्रभृतिरूपाः, स्वयमेव पाणिपयसा हस्तरूपपात्रप्रदत्तजलेन सिक्ताः वर्द्धिताः ते एव कथं छेद्याः विनाश्याः ? सघृणा सकोपेन सता मित्रशरीरकेषु बन्धुवर्गशरीरेषु शस्त्रं कथं व्यापारणीयं चालनीयं प्रभुपारतन्त्र्यादिति भावः । तथाहि चन्द्रगुप्तपक्षाश्रयणे च नन्दमित्रवधार्थम् उद्योगः कार्य्यः । स च सर्वथापि स्वयं संवर्द्धिततरुच्छेदनमिवानुचितमिति । कार्य्याणां गतयः विधेः भाग्यस्यापि आलोचनागोचरं विचारविषयतां न यान्ति, कार्य्यगत्या सर्वमेव अकर्त्तव्यं कर्त्तव्यं कर्त्तव्यमकर्त्तव्यं वाऽत्र विचार्य्यतेति, अथवा दैवगतिरेवात्र कारणम्, मया किं विचारणीयमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

[ प्रविश्य पुरुषः । ] जेदु जेदु अज्जो । अज्ज ! एसो क्खु भद्दभडभाउराअणप्पमुहेहिं संजमिअकलचलणो मलयकेदू प्पडिहारभूमिए अवत्थापिदो, ता एव्वं सुणिअ, एत्थ अज्जो प्पमाणं त्ति (३३) ।

चाण । श्रां श्रुतम् । भद्र ! निवेद्यताम् अमात्यराक्षसाय, अयम् इदानीं राजकार्य्यं करिष्यति ।

राक्ष । [ स्वगतम् । ] कथं, दासीकृत्य इदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः ? का गतिः ? [ प्रकाशम् । ] राजन् ! चन्द्रगुप्त ! विदितमेव यथा वयं मलयकेतौ किञ्चित् कालान्तरम् उषिताः, तत् परिरक्ष्यन्ताम् अस्य प्राणाः ।

[ राजा । चाणक्यमुखम् अवलोकयति । ]

चाण । वृषल ! प्रतिमानयितव्योऽयम् अमात्यराक्षसस्य प्रथमः प्रणयः । [ पुरुषम् अवलोक्य । ] भद्र ! मद्वचनात् उच्यन्तां भद्रभटप्रभृतयः, अमात्यराक्षसविज्ञापितो देवः चन्द्रगुप्तः प्रयच्छति मलयकेतवे पित्र्यमेव विषयम्, अतो गच्छन्तु भवन्तः सह अनेन, प्रतिष्ठिते च अस्मिन् पुनः आगन्तव्यम् ।

पुरु । जं अज्जो आणवेदि त्ति (३४) ।

चाण । तिष्ठ तावत्, भद्र ! भद्र ! एवम् अपरम् उच्यतां विजयपालो दुर्गपालश्च, अमात्यराक्षसस्य गृहीतशस्त्रस्य



(३३) जयति जयति आर्य्यः । आर्य्य ! एष खलु भद्रभटभागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमौ अवस्थापितः, तस्मादिदं श्रुत्वा अत्र आर्य्यः प्रमाणमिति ।

(३४) यदार्य्य आज्ञापयति इति ।

प्रीत्या देवश्चन्द्रगुप्तः समाज्ञापयति, एष तावत् श्रेष्ठी चन्दनदासः पृथिव्यां सर्वेषु नगरेषु श्रेष्ठिपदम् आरोप्यताम् इति ।

पुरु । जं अमच्चो आणवेदि त्ति (३५) ।

[ निष्क्रान्तः । ]

चाण । चन्द्रगुप्त ! किं ते भूयः प्रियं करोमि ?

राजा । किमतः परं प्रियमस्ति ?—

राक्षसेन समं मैत्री, राज्ये चारोपिता वयम् ।
नन्दाश्चोन्मूलिताः सर्वे, किं कर्त्तव्यमतः परम् ? ॥ १७ ॥

चाण । विजये ! उच्यतां दुर्गपालो विजयपालश्च, अमात्यराक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति, विना हस्त्यश्वं क्रियतां सर्वबन्धमोक्ष इति । अथवा, अमात्यराक्षसे नेतरि किं हस्त्यश्वेन प्रयोजनम् ? तदिदानीम्,—

सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम् ।
मया पूर्णप्रतिज्ञेन केवलं बध्यते शिखा ॥ १८ ॥

[ इति शिखां बध्नाति । ]

प्रती । जं अज्जो आणवेदि त्ति (३६) ।

[ निष्क्रान्तः । ]



(३५) यदमात्य आज्ञापयति इति ।

(३६) यदार्य्य आज्ञापयति इति ।

राक्षसेनेति ।—स्पष्टार्थः श्लोकः । समनामालङ्कारः ॥ १७ ॥

सहेति ।—वाहनहस्तिभ्यां वाहनेन अश्वेन हस्तिना च सह सर्वबन्धनं सर्वेषां बन्धनं मुच्यतां निर्बन्धीक्रियतां, किन्तु पूर्णप्रतिज्ञेन नन्दान्वयोन्मूलनेन तीर्णप्रतिज्ञार्णवेन मया केवलं शिखा बध्यते । तस्या आ नन्दोन्मूलनात् उन्मुक्तत्वात् इदानीञ्च तदुन्मूलनात् बन्धनमुचितं, नान्यस्य हस्त्यश्वादेर्बन्धनमपेक्षितं कृतकृत्यत्वादिति भावः । अत्र परस्परविरुद्धयोः बन्धनमोचनयोः संघटनात् विषमालङ्कारः, "विरूपयोः संघटना या च तद्विषमं मतम् ।" इति दर्पणकारोक्तेः । अनुष्टुप् वृत्तम् ॥ १८ ॥

चाण। अमात्य राक्षस! तदुच्यतां, किं ते भूयः प्रियम् उपकरोमि?

राक्ष। किमतः परमपि प्रियमस्ति? यदि न परितोषः, तदिदमस्तु।—

भरतवाक्यम्।

वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपां
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री।
म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः
स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः॥१९॥

[ इति निष्क्रान्ताः सर्वे। ]

इति सप्तमोऽङ्कः।

इति श्रीविशाखदत्तविरचितं मुद्राराक्षसं नाम नाटकम्।

---

वाराहीमिति।—प्रलयपरिगता प्रलयनिमग्ना भूतधात्री भूतानां प्राणिनां धात्री पृथिवी प्राक् पुरा अनुरूपां योग्याम् अतनुबलां महाबलां वाराहीं वराहस्य इयं वाराही तां शौकरीं तनुम् आस्थितस्य आश्रितस्य यस्य आत्मयोनेः दन्तकोटिं दंष्ट्राग्रम्, अधुना म्लेच्छैः राजभिः उद्वेज्यमाना उत्पीड्यमाना सती यस्य राजमूर्त्तेः चन्द्रगुप्तरूपमूर्त्तिधारकस्य तस्यैव भगवतः पीवरं स्थूलं भुजयुगं शिश्रिये श्रिता। स विष्णुमूर्त्तिः असौ चन्द्रगुप्तः पार्थिवः, श्रीमद्बन्धुभृत्यः श्रीमन्तः बन्धवः भृत्याश्च यस्य तादृशः सन् चिरं महीं पृथिवीम् अवतु रक्षतु। स्रग्धरा वृत्तम्॥ १९॥

इति पण्डितकुलपतिना श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता मुद्राराक्षसविवृतिः।




---

॥ समाप्तोऽयं ग्रन्थः॥